THE

PRINCESS OF WALES

SARASWATĪ BHAVANA TEXTS

*No. 49*

—o—

EDITED BY

GOPĪ NĀTHA KAVIRAJA, M. A.

---

THE

# BHEDA RATNAM



*Printed by Jai Krishna Das Gupta*
*Vidya Vilas Press, Benares City.*

---

1933

महामहोपाध्याय शङ्करमिश्रविरचितम्

# भेदरत्नम्

वाराणसेयराजकीयसंस्कृतमहाविद्यालयन्यायशास्त्रा-
ध्यापकेन न्यायव्याकरणाचार्य सूर्यनारायण-
शुक्लेन शुद्धिपत्रादिभिः संयोजितम् ।

---

THE

# BHEDA RATNAM

By

MAHĀMAHOPĀDHYĀYA S'AṄKARA MIS'RA

*Edited with Introduction etc.,*

By

NYAYA VYAKARAṆĀCHĀRYA

Pandit S'rī Sūrya Nārāyaṇa S'ukla,

Professor, Govt. Sanskrit College,

Benares.

---

1933

विश्वेश्वरः शरणम् ।

# भूमिका ।

अयि संस्कृतविद्याप्रणयिनो विद्वांसः ? विदितमेव तत्रभवतां भवतां यद् भेदवादनिरासपरस्य खण्डनखण्डखाद्यादिनिबन्धस्य नामापि श्रुतिपथमागतं भेदवादिनां मानसमाकुलयति गर्वं स्रंसयति प्रतिभां शोषयति चेति । अत एवैभिस्तत्खण्डनाय मुखमस्तीति न्यायेन निर्मिता अपि केचन निबन्धाः स्वकृतं दुष्कृतमिव गोपिता न प्रेक्षावतां दृष्टिपथमधिरोहन्ति । अधिरोहन्तोऽपि वा केचन निबन्धाः फल्गुतयोपेक्षणीयतां श्रयन्ते । किं बहुना यद् द्वैतिनोऽपि उदयनाचार्यश्रीधराचार्यादयः स्वस्वग्रन्थेषु तत्र तत्राद्वैतवेदान्ते महतीं श्रद्धां प्रकटयन्तीति एतदपि 'नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान्' इति न्यायेनाद्वैतवादस्य महत्त्वं सूचयति । एवं स्थिते भेदवादिभिर्महता प्रयत्नेन संरक्षितेपि प्रबलैरद्वैतिभिस्तान्मर्दयित्वाऽपहृते भेदवादे भेदवादिनामाश्रयभूतेषु तार्किकेष्वन्यतमो विश्वविख्यातवैदुष्यः **श्रीभवनाथशर्मतनूजो मैथिलब्राह्मणो महामहोपाध्यायः श्रीशङ्करमिश्रः** खण्डनखण्डखाद्यादियुक्तिनिराकरणपरं भेदप्रकाशापराभिधानं भेदरत्नं नाम ग्रन्थरत्नं जग्रन्थ । तदिदं श्रीमतां पुरत उपस्थापयन् महतीं प्रमोदपरम्परां वहे । सम्भावये च यच्छ्रीमन्तः स्वीकृत्येदं मामकं श्रमं सफलयिष्यन्तीति ।

अयं शङ्करमिश्रः मिथिलाधिपस्य भैरवेन्द्रस्य समकालीनो वर्धमानोपाध्यायेन दण्डविवेके स्वगुरुत्वेन वर्णितः खण्डनोद्धारकर्तुर्वाचस्पतेः पक्षधरमिश्रस्य च समकालीनत्वेन प्रसिद्धः खीष्टीयपञ्चदशशताब्द्यां बभवेति इतिहासज्ञानां मतम् ।

एतन्निर्मिता ग्रन्थाश्च—

१ खण्डनखण्डखाद्यस्य व्याख्या शाङ्करी । २ आत्मतत्त्वविवेकव्याख्या कल्पलता । ३ कणादसूत्रोपकारः । ४ न्यायलीलावतीकण्ठाभर-

णम् । ५ कणादरहस्यम् । ६ वादिविनोद । ७ गीतगोविन्दकाव्यव्याख्या ८ भेदरत्नम् । ९ उदयनकृतत्रिसूत्रीनिबन्धव्याख्या । १० चिन्तामणिमयूखः ११ गौरीदिगम्बरकाव्यम् । १२ रसार्णवकाव्यं च । एषु आदिमा अष्ट मुद्रिताः समुपलभ्यन्ते च ।

तत्रास्य भेदरत्नस्य खण्डनं मल्लनाराध्याचार्येण अद्वैतरत्ननाम्ना श्रीमधुसूदनसरस्वतीस्वामिना अद्वैतरत्नरक्षणनाम्ना च निबन्धेन कृतम् ।

तत्र तार्किकाणामद्वैतरत्नरक्षणद्रष्टॄणां वेदान्तिनां च भेदरत्नदर्शन कुतूहलापनोदनेच्छया सञ्जातदयेन सहृदयेन केनचित्पण्डितप्रकाण्डेन महामहोपाध्यायभूतपूर्वप्रयागविश्वविद्यालयकुलपतिपण्डितप्रवरडाक्टर **श्रीगङ्गानाथझाशर्म** ( एम. ए. ) महोदयानामेकमेव प्राचीनं तालपत्रलिखितमशुद्धिबहुलमपि भेदरत्नपुस्तकं समवाप्य पुस्तकान्तरान्वेषणाय मुद्रणविलम्बे सतीदमपि नष्टं माभूदित्याशङ्कया तदेवावलम्ब्य सम्पाद्यापि अशुद्धिबहुलतया स्वयशः-क्षति मन्यमानेन बहि प्रकटनं निषिद्धम् ।

साम्प्रतं वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्षप्राच्यप्रतीच्योभयदर्शननिष्णात **श्रीगोपीनाथकविराजमहोदयै**स्तस्य शुद्धिपत्रनिर्माणाय आज्ञप्तः बलियामण्डलान्तर्गतछाताग्रामभिजन काशीनिवासि सर्वतन्त्रस्वतन्त्र पण्डितप्रवर पूज्यपाद **श्रीकाशीनाथशर्ममहोदयानां** शुद्धं १५७९ सम्वत्सर-पौषकृष्णवदिप्रतिपदि वाराणस्यां केनचिल्लिखितं पुस्तकमवलम्ब्य पूर्वसम्पादितमेव पाठान्तरदानपुरस्सर शुद्धिपत्रेण संयोज्य प्रकाशितवानस्मीति—

काशी } विदुषां वशम्वदः
**सूर्यनारायणशर्मशुक्लः ।**

# अद्वैतरत्नपरीक्षा ।

अद्वैतरत्नरक्षायाः परीक्षां तर्कयुक्तिभिः ।
विदुषां पुरतः कुर्वन् रामं श्यामभुपाश्रये ॥

## तार्किकाभिमतसपरिकरापवर्गनिरूपणम् ।

शरीरं षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखं दुःखं चेत्येकविंशतिर्गौणमुख्यभेदभिन्नानि दुःखानि तेषामात्यन्तिकी निवृत्तिरपवर्गः 'तदत्यन्तविमोक्षोऽपवर्गः' इति न्यायसूत्रात्, आत्यन्तिकी दुःखनिवृत्तिश्च बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्मविशेषगुणानामुच्छेदादेव 'यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः । तावदात्यन्तिकी दुःखनिवृत्तिर्नावकल्पते ॥ धर्माधर्मनिमित्तो हि संभवः सुखदुःखयोः । मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः ॥ तदुच्छेदे तु तत्कार्यशरीरानुपलम्भनात् । नात्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्यते ॥' इति न्यायमञ्जरीदर्शनात्, तदुपायश्च 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इतिसूत्रान्मिथ्याज्ञाननिवृत्तिः, मिथ्याज्ञानं च अस्तित्वेनाधिगते आत्मनि नास्तीति अनात्मनि शरीरे आत्मेत्यादिरूपम्, एतन्निवृत्त्यर्थमेव 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या स्वात्मसाक्षात्कारो विधीयते; एतदेव 'न ततोऽन्यः प्रतियोग्यनुयोगितया चात्मैव तत्त्वतो ज्ञेयः' इत्यनेनात्मतत्त्वविवेके उक्तम्, एवं च शरीरभिन्नत्वेनात्मज्ञानस्येव आत्मभिन्नत्वेन शरीर ज्ञानस्यापि मोक्षहेतुत्वं सिद्धम् ।

## भेदज्ञानस्य मोक्षहेतुत्वम् ।

यत्तु आत्मनि शरीरभेदज्ञानस्य मोक्षहेतुत्वे 'मम देहः' 'नाहं गौरः' इति भेदप्रतिभासकाले संसारानुपलम्भ इति अद्वैतरत्नकृता उक्तम

तत्तु 'आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्' इति स्मृत्या 'अथ परिनिष्पन्नसाधनापायः साक्षात्कारवर्ती प्रतिपद्य चतुर्थीं प्रतीतिं निर्मुक्तसकलक्लेशजालोऽप्रवर्तमानो धर्माधर्मसाधनेषु निरुद्धानागतधर्माधर्मप्रबन्धोत्पादो भूतेन्द्रियजयी प्राज्ञाज्योतिर्जीवन्मुक्त इत्युच्यते न चैवमवस्थोऽपि सहसैव देहादिभिर्वियुज्यते नाभुक्तं क्षीयते कर्मेतिश्रुत्या अन्त्यसुखदुःखसंविज्ञानविरोधस्य कर्मणामवधारणात्' इति तात्पर्यटीकया च समाहितम् । त्वन्मते तत्त्वमसीतिवाक्यार्थबोधानन्तरं संसारोच्छेदापत्तिभिया 'अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् । संसारकारणाज्ञानतमसश्चण्डभास्करः' इतिपञ्चदश्युक्त्या अपरोक्षजीवब्रह्मैक्यज्ञानस्य मोक्षजनकत्ववत् ।

यत्तु 'आत्मा वाऽरे द्रष्टव्यः' 'आत्मनो वाऽरे दर्शनेन श्रुत्या मत्या विज्ञानेनेदं सर्वं विज्ञातं भवति' 'तमेव विदित्वाऽतिमृत्युमेति' 'आत्मा ज्ञातव्यः' 'न स पुनरावर्तते' इति श्रुतिभिरात्मज्ञानस्य मुक्तिहेतुत्वबोधनेऽपि भेदज्ञानस्य मुक्तिहेतुत्वे प्रमाणं नास्तीति तत्तुच्छं अस्थूलमनण्वह्रस्वमिति श्रुत्या स्थूलाच्छरीराद्भिन्नमात्मस्वरूपमुक्त्वा 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः' इत्यनेन तादृशज्ञानस्य ब्राह्मणपदेन मुक्तिहेतुत्वावगमात् यथा चैतत्तथैतन्मन्त्रव्याख्याने शाङ्करभाष्ये व्यक्तम् । न च न विद्यते स्थूलं यत्र तदस्थूलमितिरीत्या सकलद्वैतात्यन्ताभाव एव प्रतिपाद्यते न भेद इति अद्वैतरत्नोक्तं युक्तमिति वाच्यम् 'अस्थूलं तत् स्थूलादन्यत् एवं तर्ह्यणु अनणु अस्तु तर्हि ह्रस्वमह्रस्वम् अस्तु तर्हि दीर्घमदीर्घम् इति बृहदारण्यकशाङ्करभाष्येण नञो भेदपरत्वावगमेन तथा व्याख्यानस्यायुक्तत्वात् अत्यन्ताभावपरत्वेऽपि नञो वैधर्म्यरूपभेदपरत्वसंभवाच्च । एवं 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेति ॥ इति श्रुतिरपि भेदज्ञानस्य

मुक्तिहेतुत्वं बोधयति तथा 'द्वा सुपर्णा सयुजा' 'द्वे ब्रह्मणी वेदितव्ये' इति श्रुतिरपि भेदव्याप्तद्वित्वबोधकतया भेदे तज्ज्ञानस्य मोक्षहेतुत्वे च मानम् ।

यच्च 'अतोऽन्यदार्तम्' इति श्रुत्या ब्रह्मातिरिक्तस्य पारमार्थिकत्वनिषेधाच्छ्रुत्युक्तः स्वर्गयागयोः कार्यकारणभावो व्यावहारिकभेदमादायोपपाद्य इति तन्न 'आर्तो जिज्ञासुरर्थार्थी' इत्यादौ आर्तशब्दस्य दीने 'यस्योभयं हविरार्तिमाच्छेत्' इत्यत्र आर्तिशब्दस्य नाशे प्रयोगदर्शनेन 'अतोऽन्यदार्तम्' इति श्रुतावप्यार्तशब्दस्य दीनपरताया नश्वरपरताया वा औचित्येन मिथ्याभूते वस्तुन्यप्रयोगेण ब्रह्मातिरिक्तस्य पारमार्थिकत्वनिषेधायोगात् । कथंचिन्मिथ्यात्वबोधकत्वेऽपि आस्थानिवृत्तिद्वारैवार्तिबोधनस्योपयोग इति बोध्यम् ।

न च 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' 'क्षेत्रज्ञं चापि मां विद्धि' इति श्रुतिस्मृतिभिः ब्रह्माभिन्नजीवविषयकज्ञानस्य मोक्षहेतुत्वमवगम्यतेऽतो भेदज्ञानस्य मोक्षहेतुत्वं न युक्तमेकत्र भावाभावयोरजनकत्वादिति वाच्यम् निरुक्तश्रुतिस्मृतिभिर्जीवब्रह्माभेदस्यावगमेऽपि तस्य मुक्तिहेतुत्वप्रतिपादकपदाभावेन मुक्तिहेतुत्वासिद्धेः । तमेव विदित्वा' 'ज्ञात्वा देवं सर्वपाशापहानिः' क्षीयन्ते चास्य कर्माणि' इतिश्रुत्येश्वरसाक्षात्कारस्य मोक्षहेतुत्वावगत्या तदुपयोगितया जीवब्रह्माभेदचिन्तनरूपस्य योगस्य तत्त्वमस्यादिवाक्यैर्बोधनेन क्षत्यभावाच्च एवं 'सर्वं यदयमात्मा' 'ऐतदात्म्यमिदं सर्वम्' आत्मैवेदं सर्वम्' इति भावनापि रागद्वेषादिनिवृत्तिद्वारा ईश्वरसाक्षात्कारे एवोपयुज्यते ।

वस्तुतस्तु पूर्वोदीरितश्रुतिभिर्भेदज्ञानस्य मुक्तिहेतुत्वसिद्धौ अभेदज्ञानस्य मोक्षहेतुत्वप्रतिपादिकाः श्रुतयोऽविभागलक्षणाभेदज्ञानस्य मुक्तिहेतुत्वपरा 'अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि मामकम्' इति भगवदुक्तेः 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इति श्रुतेश्चेति तत्त्वम् ।

नच 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यनेन निन्दि-

तत्वाद् भेदस्य न वास्तविकत्वमिति वाच्यम् 'एक'की न रमते' 'एकाकी बिभेति' इति श्रुत्याऽभेदस्यापि निन्दितत्वेन तत्रापि श्रुतेः प्रामाण्यायोगात् ।

वस्तुतस्तु पश्यति वेद विदित्वा इत्यादिपदघटिततया भेदश्रुतिभिर्द्वेषसम्पादकतया भेदज्ञानस्य निन्दितत्वेऽपि न भेदस्य निन्दतत्वम् ।

## व्यावहारिकत्वनिवचनासम्भवप्रदर्शनम् ।

यत्तु अनादिभावरूपाज्ञानतदधीनान्यतरत्वं व्यावहारिकत्वं नचाननुगमः मोक्षहेतुज्ञाननिवर्त्यत्वेनानुगमात् नाप्यव्याप्त्यतिव्याप्ती प्रपञ्चे सर्वत्र विद्यमानत्वात् ब्रह्मण्यविद्यमानत्वाच्चेति भेदव्यावहारिकत्वनिवर्चनम् तदपि अनादिभावरूपाविद्यायां मानाभावेनासम्भवि ।

न च 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' 'अजामेकां लोहित, शुक्लकृष्णाम्' इति अविद्याया अनादित्वे मानमिति वाच्यम् मायायां 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' श्रुत्या सावयवत्वसूचनद्वारा जन्यत्वस्य 'प्रजापतिपतिं विष्णुमनन्तमपराजितम् । प्रधानपुंसोरजयोः कारणं कार्यभूतयोः' इति विष्णुपुराणे आहत्य जन्यत्वस्य प्रतिपादनेन मायायाः स्वातन्त्र्यनिरासाय रूपकेण अजामिति अजयोरिति प्रयोगस्य वर्णनीयतयाऽदोषात् 'प्रकृतिः पुरुषश्चोभौ लीयेते परमात्मनि' इति श्रुत्या मायाया आत्मनि लयप्रतिपादनेन जन्यत्वस्य निर्बाधाच्च ।

न च तार्किकमते आकाशस्य नित्यत्वेन श्रुत्या चानित्यत्वागमेन श्रुतिविरोध इति वाच्यम् शिखी ध्वस्त इतिवच्छब्दस्य जन्यत्वेन शब्दाश्रये आकाशे जन्यत्वव्यवहारस्योपपादनीयत्वात् ।

## मायादिशब्दानामदृष्टार्थकत्वम् ।

अदृष्टं हि दुरुन्नेयतया मायाशब्देन मूलतया प्रकृतिशब्देन विद्यानिवर्त्यतयाऽविद्याशब्देन चोच्यते यदाहुराचार्याः—

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो-
मूलत्वात्प्रकृतिः प्रबोधभयतो ऽविद्येति यस्योदिता ।

देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम इति ॥

न च मायाया ज्ञाननिवर्त्यत्वकथनान्मिथ्यात्वं न तु अदृष्टरूपत्वमिति वाच्यम् ज्ञाननाश्ये ज्ञानप्रागभावे, विषयदोषज्ञाननाश्ये रागे, गरुडध्याननाश्ये विषे, सेतुदर्शननाश्ये पापे, मिथ्यात्वासम्प्रतिपत्त्या ज्ञाननिवर्त्यस्य कर्मणः ( मायायाः ) मिथ्यात्वासंप्रतिपत्तेः ।

न च मायाऽविद्यादिशब्दानां वेदान्त्यभिमतानिर्वचनीयाज्ञानपरत्वं युक्तमिति वाच्यम् 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' इति श्रुतौ 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरां मृत्युं ते पुनरेवापि यन्ति' इति श्रुत्यनुरोधेन 'अविद्या कर्मसंज्ञाऽन्या' इति विष्णुपुराणेन च अविद्याशब्दस्य कर्मपरत्वावसायात् । एवं 'प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया' इति गीतया 'माया वयुनं ज्ञानम्' इति निघण्टूक्त्या च मायाशब्दो भगवदिच्छापरः कर्मरूपाविद्यापरो वा, एवम् 'अनृतेन प्रत्यूढा' इत्यत्र अनृतशब्दोऽपि फलाभिसन्धिरहितकर्मेतरसांसारिकफलप्रदकर्मपरः ऋतशब्दस्य 'ऋतं पिबन्तौ' 'ऋतं च सत्यं च' इत्यादौ कर्मपरताया 'अनृतादात्मानं जुगुप्सेत्' इतिश्रुतावनृतशब्दस्य पापजनककर्मपरतायाश्च दर्शनात् । 'तेन मायासहस्रं तच्छम्बरस्याशुगामिना । बालस्य रक्षता देहमेकैकश्येन सूदितम्' इति वचने मायायाः शस्त्रच्छेद्यत्वोपवर्णनेन मायाया मिथ्यात्वासिद्धेः तस्मान्मायाशब्दो विचित्रशक्तिपरः एवं च मायाऽनृतविद्याप्रकृतिशब्दाः कर्मपराः कर्मजन्याऽदृष्टपरा वा इति वेदान्त्यभिताऽविद्या न श्रुतिस्मृतिसम्मतेति सिद्धम् ।

प्रकृतिशब्दस्य अज्ञानपरत्वं तु न युक्तम् 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते' इति 'प्रकृतिः पुरुषश्चेति लीयते परमात्मनि' इति स्मृत्या अज्ञाननाशानन्तरं लयप्रतिपादनात् प्रकृतिशब्दश्च नोपादानकारण एव जनिकर्तुरित्यत्र निमित्तकारणेऽपि प्रयोगात् यथा चेदं

तथा भेदसिद्धिटीकायां निरूपितमस्माभिः 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' 'ज्ञात्वा देवं सर्वपाशापहानिः' 'तरति शोकम्' तरतिमृत्युम् 'तरत्यविद्यां विततामू' इत्यादिश्रुतयः 'क्षीयन्ते चास्य कर्माणि' इति वचनानुरोधेन ज्ञानस्यादृष्टनिवर्तकत्वपरा एवेति ध्येयम् ।

## अभेदे कार्यकारणभावानुपपत्तिप्रदर्शनम् ।

किञ्चाद्वैतवादे कार्यकारणभावानुपपत्तिः कार्यकरणभावस्य भेदाधिष्ठानत्वात् । न च घटादीनां ब्रह्मणैवाभेदः स्वीक्रियते न तु परस्परमपीति अद्वैतरत्नोक्तं युक्तमितिवाच्यम् तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन दण्डघटयोरभेदस्याशक्यपरिहारत्वात् ।

## सर्वधियां भेदविषयकत्वम् ।

भेदो हि अन्योन्याभावस्वरूपवैधर्म्यभेदेन त्रिविधः तत्र निर्विकल्पकबुद्धीनां स्वरूपभेदो विषयः, न च स्वरूपस्य भेदत्वे तस्यान्यसाकाङ्क्षतापत्तिरितिवाच्यम् । पितृपदार्थस्य देवदत्तस्य चैक्येऽपि पितृत्वेनैव रूपेणैव तस्यान्यसाकाङ्क्षत्वं न तु देवदत्तत्वेनापीतिवत् अन्योन्याभावत्वेनैव तस्यान्यसाकाङ्क्षता न तु स्वरूपत्वेनापीत्यदोषात् ।

सविकल्पकबुद्धीनां तु वैशिष्ट्यविषयकतयाऽतद्व्यावृत्तिरूपान्योन्याभावाख्यभेदविषयकत्वम् तदुक्तं किरणावल्याम् 'अतद्व्यावृत्तिवैशिष्ट्यम्' इति । न च बौद्धमताविशेषः, बौद्धैरतद्व्यावृत्तिरेव पदार्थतावच्छेदको धर्मोऽङ्गीक्रियते तार्किकैस्तु गोत्वादिरिति विशेषात् । न च मतान्तरानुसारिभिर्वैशिष्ट्याख्यं पदार्थान्तरमङ्गीकृतमिति न तस्य भेदरूपतेति वाच्यम् वैशिष्ट्यस्य पदार्थान्तरत्वे सप्तपदार्थपरिगणनासंगतेः मतान्तरस्य च दुर्युक्तितत्वेनासम्भवात् । अस्थूलमित्यत्र न स्थूलं यत्रेति समासाङ्गीकारे वैधर्म्यरूपभेदपरत्वमिति तदेवं सर्वज्ञानानां भेदविषयकत्वसिद्धौ न श्रुत्या सर्वाद्वैतप्रतिपादनम् ।

## भेदपारमार्थिकत्वनिरूपणम् ।

नापि भेदत्वनिर्वचनासम्भवः तथात्वे 'अतोऽन्यदार्तम्' 'अन्यदात्मनोऽपश्यत्' 'अन्योऽन्तर आत्मा' इत्यादितो बोधानापत्तेः अतो भेदपदवाच्यत्वं वाच्यतासंबन्धेन भेदपदवत्त्वम् अखण्डोपाधिर्वा भेदत्वमिति निर्वचनं बोध्यम् उपाधीनां च सामान्येऽन्तर्भावः इति न पदार्थान्तरतापत्तिः तथा हि सामान्यं द्विविधं जातिरूपमुपाधिरूपं च समानानां भाव इति व्युत्पत्तेः न च भाष्यकृता सामान्यं परापरभेदेन विभक्तं न तु जात्युपाधिरूपेणेति वाच्यम् जातेरप्युपाधिरूपतया स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकबोधानुकूलव्यापाररूपविभागासम्भवेन तथा विभागाकरणात्

घटपटौ न भिन्नाविति परमार्थिकभेदस्य निषेद्धुमशक्यतया अपारमार्थिक एव भेदो निषेध्यस्तथा च पारमार्थिकभेदस्यावस्थानम् न च भेदस्य युक्त्यसहत्वेन न पारमार्थिकभेदस्यावस्थानमिति वाच्यम् । भेदस्य युक्त्यसहत्वे मानाभावात् । नन्वस्ति सा तथाहि भेदो भिन्ने वर्ततेऽभिन्ने वा नाद्यः तद्भेदभिन्ने तद्भेदवृत्तावात्माश्रयात् भेदान्तरेण भिन्ने तद्भेदवृत्तावनवस्थानात् नान्त्यः विरोधादिति चेन्न तद्भेदविशिष्टे तद्भेदवृत्तावात्माश्रयाभावात् न हि तद्भेदे तद्भेदः प्रतिपाद्यते येनात्माश्रयः स्यात् यद्विशेष्यवृत्ति तद्विशेषणवृत्तीति नियमाभावात् । न च यद्विशेष्यवृत्ति तद्विशेषणवृत्तीति नियमानङ्गीकारे दण्डे दण्डिनं भोजयेत्यत्र उपलक्षणत्वस्य दण्डिनमानयेत्यत्र विशेषणत्वस्य च व्यवस्था न स्यादिति वाच्यम् तावतापि भेदोपलक्षिते घटे एव भेदवृत्तिताङ्गीकारेण दोषाभावात् तादृशव्यवस्थायास्त्वन्मतसिद्धत्वेऽपि अप्रामाणिकत्वाच्च घटोऽनित्य इत्यत्र घटत्वे उपलक्षणत्वस्य कैरप्यनभ्युपगमाच्च । किं च अभिन्नेऽभेदो वर्तते भिन्ने वेति वृत्तिविकल्पे यदेवोत्तरं तव तन्ममापि किं च घटस्वरूपस्यैव भेदत्वाङ्गीकारेण वृत्तिविकल्पानवकाशः ।

## न्यायशास्त्रस्योपादेयत्वम् ।

ननु 'आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् । तस्येयं फलनिर्वृत्तिः शृगालत्वं मम द्विज' इति मोक्षधर्मवचनेन तर्कशास्त्रमनादेयमिति चेन्न 'तत्रोपनिषदं तात परिशेषं च पार्थिव । मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम्' इति मोक्षधर्मे आन्वीक्षिक्यपरपर्यायन्यायशास्त्रस्य प्रशंसादर्शनेन आन्वीक्षिकीं तर्कविद्यामिति वचने भगवद्भक्तिरहिततर्कशास्त्रनिन्दाया निरर्थकामित्यनेनावगमात् 'अहमासं पण्डितको हैतुको वेदनिन्दक' इति पूर्वार्धेन सूचितोऽप्ययमर्थः । अत एव 'न्यायो मीमांसा धर्मशास्त्राणीति' 'श्रुतिः पुराणन्यायमीमांसा इति' याज्ञवल्क्यस्मृतिः 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' इति आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः' इति मनुश्च तर्कशास्त्रप्रशंसामाह । प्रत्युत वेदान्तशास्त्रमेव मुमुक्षूणां तत्त्वज्ञानविरोध्यर्थोपस्थापकतया अनादेयम् तर्कशास्त्रं तु श्रोतव्यो मन्तव्य इति श्रुत्या मन्तव्यश्चोपपत्तिभिरिति स्मृत्या च उपनिषदर्थनिर्णयायाश्रयणीयम् ।

यत्तु अनु पश्चाच्छ्रवणानन्तरमीक्षा मननमन्वीक्षेति व्युत्पत्त्या मन्तव्य इति विधेर्वापरायणीयं चतुर्लक्षणीशास्त्रमध्येतव्यं न्यायशास्त्रं तु विरोध्यर्थोपस्थापकतयाऽनादेयमिति तच्चुच्छम् अन्वीक्षापदस्य तर्कशास्त्रे एव प्रसिद्धेः 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' 'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सिता' इत्यादिवचनैस्तर्कशास्त्रस्योपादेयत्वलाभाच्च । 'एतेन शिष्टापरिग्रहा अपि व्याख्याता' इति सूत्रं तु बौद्धादिदर्शनमेव विषयीकरोति न तु न्यायदर्शनं मन्वादिभिः शिष्टैः परिगृहीतत्वादितिशिवः प्रमाणम् ।

इति न्यायव्याकरणाचार्य सूर्यनारायण शुक्लरचिताऽद्वैतरत्नपरीक्षा ।



# भेदरत्नस्थविषयाणां सूचीपत्रम् ।

महामहोपाध्याय-शङ्करमिश्रविरचितम्

# भेदरत्नम्



श्रीगणेशाय नमः

विद्यामायाप्रकृतिरिति यद् गीयते दृष्टमेतत्
साहित्येन त्रिभुवनमयीं सृष्टिमेतां वितन्वन् ।
आनन्दोऽहं चितिरहमिदं मन्मयं सर्वमित्थम्
यः स्वं स्तौति श्रुतिमयगिरा तं नुमः शम्भुमीशम् ॥ १ ॥

मोक्षाय स्पृहयालवः श्रुतिगिरां श्रद्धालवोऽर्थे ऋजौ
तर्कोदर्कविभावनासु सुतरां व्याजेन निद्रालवः ।
भेदे दृक्पथमागतेऽपि सहसा तन्द्रालवश्छान्दसे
कैवल्यात् पतयालवः शृणुत सद्युक्तिं दयालोर्मम ॥ २ ॥

भेदरत्नपरित्राणे तार्किका एव यामिकाः ।
अतो वेदान्तिनःस्तेनान्निरस्यत्येष शङ्करः ॥ ३ ॥

देहादेस्तात्त्विकाद् भेदं सत्यमात्मन्यजानताम् ।
मुमुक्षूणां न मोक्षोऽस्तीत्यतो भेदो निरूप्यते ॥ ४ ॥

न सा धीः क्वचिदप्यस्ति यत्र भेदो न भासते ।
अतएव न तन्मानं यन्न लोकप्रमापकम् ॥ ५ ॥

तथा हि—"सहोवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्पर्शम(१)गन्धमरसमचक्षुष्कमश्रोत्रमवागमनो न तेजस्कमप्राणममुखममात्रमगोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतमपूर्वमनपर(२)मनन्तरमबाह्यं न तदश्नाति कञ्चन न तदश्नाति कश्चनेति"(३) श्रुतावन्योन्याभावात्मकभेदस्यैव नञर्थत्वम् । तथा च स्थूलं यच्छरीरादि तद्भिन्नं ब्रह्मेत्यर्थः । एवमणु यन्मनःप्रभृति तद्भिन्नं ब्रह्मेत्यर्थः । यद्यपि क्रमात् अस्थूलमिति स्थौल्यात्यन्ताभाववदित्यर्थ इति चेत् तथापि वैधर्म्यभेदस्य नञर्थत्वं तथा चान्योन्याभाव इत्यर्थः । भेदप्रतिपत्त्यर्थमेव हि वैधर्म्याभिधानम् अन्यथा अभिधानानर्थक्यप्रसङ्गात् । न तदश्नाति कञ्चनेति तत् ब्रह्म कञ्चन आत्मानं नाश्नाति । न कश्चन तदश्नाति

(१) प्रचलितपुस्तकेषु अस्पर्शमितिपाठो न दृश्यते । न च शङ्कराचार्येणाऽपि तद्व्याख्यानावसरे धृतोऽयं पाठः ।

(२) अगोत्रमित्यारभ्यानपरमित्यन्तः पाठः प्रचलितपुस्तकेषु नोपलभ्यते ।

(३) बृहदारण्यकोपनिषत् ३-८-८

न कश्चिदात्मा तद्ब्रह्म व्याप्नोति केनाप्यात्मना क्षेत्रज्ञेन नैतत् सम्बध्यते, विभुनोः संयोगकारणान्यतरकर्मोभयकर्मान्यतरकर्मावयवसंयोगाभावादिति स्वरूपवत...... ।

एवं मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति(१) श्रुतिरपि भेदे मानम् । स पुरुषः मृत्योः संसारात् मृत्युं संसारमाप्नोति पुनः पुनः संसरतीति—य इह नानेव पश्यति—न तु वस्तुगत्यैव नाना पश्यतीत्यर्थात् इवपदसन्दंशात्, अन्यथा नाना पश्यतीत्येव स्यात् ।

स किल एको द्रष्टा अभिन्नो भवतीति श्रुतिरपि भेदपरा । अन्ये तु द्रष्टारः क्षेत्रज्ञा भेदवन्त इत्यर्थस्य स किलेत्यनेन ध्वननात् ।

तत्त्वमसीति(२) श्रुतिरपि भेदपरा. युष्मच्छब्दस्य गम्यमानस्य भिन्नसम्बोध्यविषयत्वात् ।

न तु तद्द्वितीयमस्तीति श्रुतिरपि भेदतात्पर्यिका, तद्ब्रह्म द्वितीयं नास्तीति धर्म्युपरागेण

(१) बृह० उप० ४-४-१९; कठ० ४-११

(२) छान्दोग्य० ६-८-७

निषेधात्। अन्यथा द्वैतं नास्तीति धर्मोपरागेण निषेधः स्यात्।

एवञ्च एकमेवाद्वितीयं ब्रह्मेति(१) श्रुतेरपि ब्रह्मातिरिक्तपदार्थनानात्वस्वीकार एव, ब्रह्मणि ब्रह्मप्रतियोगिकभेदस्यैव निषेधात् धर्मिविशेषसमभिव्याहारबलेन तथैव व्युत्पत्तेः। यथेह भूमण्डले एक एव नरपतिरिति वाक्याद्राजगतनानात्वव्यतिरेकः प्रतीयते न तु हस्त्यश्वरथपदातीनामपि। यथा चेह कानने किंशुकतरुरेक एव न नानेत्यभिधाने किंशुकतरुगतमेव नानात्वं प्रतिषिध्यते न तु शालतमालहिन्तालादीनामपि।

एवम् "एक एव तु भूतात्मा भूते भूते व्यवस्थितः" "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्।" इत्याद्यपि भेदाविरोधिजन्ममरणप्रबन्धेन बाल्यकौमारभेदेऽपि नराभिन्नेषु शरीरेषु एक एव भूतः क्षेत्रज्ञ आत्मा सत्यो व्यवस्थितः न त्ववच्छेदकशरीरभेदेनात्मभेदवन्मरणप्रबन्धेन शरीरभेदेऽपि बाल्यकौमारभेदेऽपि आत्मनो न भेद इत्यर्थात्, यथा एकधा एकप्रकारो-

(१) छान्दोग्य० ६-२-१

ऽपि चन्द्रो बहुधा बहुप्रकारो दृश्यते तरङ्गप्रसङ्गे तथा जन्ममरणप्रबन्धभिन्नशरीरावच्छिन्न एक एवात्मा बहुप्रकारो दृश्यते तत्तत्कर्मपरतन्त्रो यातुधानमानुषपशुमृगसरीसृपशरीरप्रतिबन्ध इति । एवञ्च "द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च" इति श्रुतेर्भेदोऽर्थः स्फुट एव।

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति श्रुतिः साक्षादेव भेदमाह। किञ्चात्र श्रुतौ प्रकृत्यर्थः प्रत्ययार्थो वा द्विबहुत्वादिः। तत्र भेदाविनाभूतधर्मप्रतिपत्तौ भेदप्रतिपत्तिरावश्यकी। यथा "सहस्रशीर्षा पुरुष" इत्यत्र प्रकृत्यर्थो बहुत्वं "विश्वेदेवा" इत्यादौ प्रत्ययार्थः, क्वचित् सम्बद्ध एव भेदाविनाभूतः प्रतीयते। यथा "तद्विष्णोः परमं पद"मित्यादौ। यथा वा "अग्नेरपत्यं प्रथमं हिरण्य"मित्यादौ। क्वचित्कार्यकारणभाव एव भेदाविनाभूतः प्रतीयते। "यथा अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यादीनां सर्वेषां विधिवाक्यानाम्।

एवं स्तुतिनिन्दापरकृतिपुराकल्पभेदेन भिन्न-

स्यार्थवादस्यापि भेदो भेदाविनाभूतोऽनुवाद आवश्यकः। यथा "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजत" इति स्तुतौ कार्यकारणभावः। "एष वाव प्रथमो यज्ञानां ज्योतिष्टोमोऽथानेन हुत्वा योऽनेन न जुहोति सोऽन्धं तमः प्रविशती"त्यादि निन्दायाम्। एवं परकृतिपुराकल्पयोरिति।

किञ्च "मैत्रेयि आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति" प्रश्नोत्तरमुखेनोपनिषदवतारोऽपि भेदमन्तरेणानुपपन्नः न हि ज्ञाते प्रश्नो नाप्यज्ञाते उत्तरम्। अतः प्रष्टुरपेक्षया उत्तरयितुः प्रसिद्ध एव भेदः। श्रवणादिप्रतिपत्तीः परस्परभिन्ना विदधती श्रुतिरपीयं भेदमन्तरेणानुपपद्यमाना। नह्यमूषामभेदे विधिचतुष्टयमुपयुज्यते। तथा सति श्रोतव्य इत्येव वा ब्रूयात्।

तथा च न सा श्रुतिर्यत्र शब्दबलादर्थबलाद्वा भेदो न भासत इति।

किञ्च न सा धीः यत्र भेदो न विषयः। तथा हि विशिष्टज्ञानानां वैशिष्ट्यविषयतयैव भेदविषयता। वैशिष्ट्यस्य पदार्थान्तरत्वानुपपत्तौ

परिगणितभावपदार्थानन्तर्भावे तद्व्यावृत्तिरूपान्योन्याभावाख्यभेदरूपतैव वाच्या। तथा च वैशिष्ट्यविषयकज्ञानानां सिद्धा भेदाविषयता। तदाहुराचार्या गुणकिरणावल्याम् "अतद्व्यावृत्तत्वं वैशिष्ट्यम्" इति(१)। निर्विकल्पकानन्तरभावि घटोऽयमिति सविकल्पकस्य कथमतद्व्यावृत्तिः पूर्वाज्ञाता विषय" इति चेत् न, वैशिष्ट्यविषयत्वान्यथानुपपत्त्या संज्ञास्मरणस्यैव निर्विकल्पकसमनन्तरकालीनस्यातद्व्यावृत्तिविषयकत्वकल्पना। सर्वतो ह्यन्यथानुपपत्तिर्बलीयसी। "एवं सत्यन्यापोहः पदार्थः स्यात्—तथा च जितं बौद्धैरिति" चेत् न, गोत्वादीनां पदादनुपस्थितौ वैशिष्ट्यमपि कस्य भासेत येनान्यापोहभाननैयत्यं स्यात्। तथा च बौद्धपक्षादयमेव भेदः यत् तैरन्यापोह एव पदार्थतावच्छेदको धर्मोऽङ्गीक्रियते अस्माभिस्तु गोत्वादिरिति। निर्विकल्पकधियां यद्यपि न वैशिष्ट्यं विषय इति भेदोऽन्योन्याभावो न भासते तथापि स्वरूपभेदो

---

(१) गुणकिरणावली, संख्यानिरूपणम्, पृ० २०२.१३ Benares Ed.

घटादिवैधर्म्यञ्च घटत्वादिर्भासते । तेनैव भेदविषयता । तदपि भेदत्वेन न भासत इति यत् किञ्चिदेतत् ।

तदेवं सर्वधियां भेदविषयत्वे सिद्धे सर्वप्रमाणानां भेदप्रमापकत्वमयत्नसिद्धम् ।

तदेवं शरीरादिभिन्नत्वेनापि श्रुत्या समधिगतस्यात्मनो ब्रह्मणोऽनु पश्चादीक्षणं मननमन्वीक्षा इति व्युपत्त्या मन्तव्य इति विधेरन्वीक्षाध्ययनमेव विषयार्थः, प्रकारान्तरेण मननानुपपत्तेर्विध्यनिर्वाहात्। वेदान्तशास्त्रन्तु मुमुक्षूणां तत्त्वज्ञानविरोध्यर्थोपस्थापकतयाऽनादेयमेव । यदि तु तैर्थिकप्रवृत्त्यनुरोधात् कथञ्चिदुपादेयता तदा श्रोतव्य इति विधिविषयतयाऽपि युक्तिवैधुर्येण मननासंस्पर्शात् मन्तव्यश्चोपपत्तिभिरित्यनेन मननस्योपपत्तिसाध्यत्वावगमात् ।

"ननु भेदश्चेत् युक्तिं न सहते तदा श्रुतिवाक्यानामपि भेदप्रतिपादकत्वेन त्वयोपपादितानां तात्पर्यान्तरमेवोन्नेतुमर्हतीति" चेत्—युक्तिं न सहत इति कोर्थः ?किं भेदपदार्थ एव नास्ति—सन्नपि वा न यथा-

र्थः । न तावदाद्यः, घटात्पटो भिन्न इत्यादि भेदानुभवस्य लौकिकपरीक्षकसाधारणस्यापलापानर्हत्वात् । नापि द्वितीयः, अयथार्थता हि विषयबाधगम्या, बाधश्च विपरीतप्रमा । सा च प्रकृते प्रात्यक्षिकी तावन्नास्ति, घटः पटो न भवतीति प्रत्यक्षानन्तरं घटः पट एवेति विपरीतप्रत्यक्षाभावात् ।,'ननु नीलन्तम इति प्रत्यक्षानन्तरं नेदं नीलन्तम इति प्रात्यक्षिकबाधाभावेऽपि यथा तव मते तद्बाध्यत्वम् एवमहं स्थूलो गौरो वेत्याद्यहंप्रत्ययानन्तरं न हि न स्थूलो गौरो वेति प्रात्यक्षिकबाधाभावेऽपि भ्रान्तत्वम्,—तथा प्रकृतेऽपि स्यात् यौक्तिकबाधस्योभयत्रापि तुल्यत्वादिति" चेत्—मैवम् भेदबाधकयुक्त्यभावात् ।

"नन्वस्ति सा । तथाहि भेदवत्तया घटादयो भिन्ना इति यदभिधीयते तत्र भेदोऽभिन्ने भिन्ने वा वर्तते । न तावदाद्यः, विरोधात् । न ह्यभिन्नं भिन्नं भवति । द्वितीये तु तद्भेदभिन्ने तद्भेदवृत्तौ कथं नात्माश्रयः। अविशिष्टे स्ववृत्तावंशतः स्ववृत्तिः । भेदान्तरेण भिन्नेऽधिकरणभेदवृत्त्यभ्युपगमे तत्राप्येवमभ्युपगमेन कथमनवस्था । एकेन भिन्ने द्वितीयभेदः तेन च भिन्ने प्र-

थमो भेद इत्यात्माश्रयानवस्थयोः परिहारोऽप्यन्योन्याश्रयः। बहवो भेदा युगपदेव ज्ञायमानं वस्तु परिरभन्त इत्यभ्युपगमेपि किंभेदविशिष्टे को भेदो वर्तत इति तेषामन्योन्यकलहो दुस्समाधिः। प्रथमेनैव भेदेन भिन्ने वस्तुनि द्वितीयादिभेदाभ्युपगमवैयर्थ्यम्। उत्तरोत्तरभेदाभ्युपगमे च कृतकृत्यत्वेन पूर्वपूर्वभेदविलोप" इति चेत्—

मैवम्। "वर्तत" इति संयोगलक्षणां समवायलक्षणां वा वृत्तिमधिकृत्य यदि प्रश्नःतदान्योन्याभावात्मकभेदो न वर्तत इत्येवोत्तरम् अभावस्य संयोगसमवाययोरनङ्गीकारात्। अथ स्वरूपलक्षणामधिकृत्य प्रश्नस्तदा घटः स्वभावनियमान्नित्येनान्योन्याभावेनोपरक्तो भासत इत्येवोत्तरम्। "उत्पन्नमात्रो घटः कथं भिन्नः स्यात् भेदेन सम्बन्धाभावादिति" चेत्—उत्पन्नमात्रः कथं घटोऽपि? घटत्वेन सम्बन्धाभावादिति तुल्यम्। "उत्पत्तिक्षण एव घटत्वेन सह घटः सम्बद्धो जातः सम्बद्धश्चेत्येकः काल" इति चेत्—उत्पत्तिक्षण एव भेदेनापि सम्बद्ध एव जातः सम्बद्धश्चेत्येकः काल इति तुल्यम्। विशेषश्चेतर-

त्र समवायः, अत्र स्वभावसम्बन्धः । स च सम्बन्धान्तरमन्तरेणोपश्लिष्टप्रत्ययजननयोग्यत्वमेव । "उत्पत्तेः पूर्वं कीदृगासीद्घट" इति चेत्—नासीदेव। तर्हि तदन्योन्याभावोपि कथमासीत् ? यथा तत्प्रागभावो यथा वा तस्य जातिः। सा तज्जातीयान्तरनिष्ठासीदिति चेत्प्रलये कथमासीत् ? एवमेवेति चेदुत्पत्स्यमानघटान्योन्याभावोऽपि तथैवासीत्। घटत्वादावपि वयं विप्रतिपद्यामहे इति चेत्तर्हि बौद्धनिरासवत्तत्रापि निरासो न दुष्करः। परन्त्वस्माकमिह भेदमात्रं सिसाधयिषितमिति।

यद्वा तद्भेदभिन्न एव घटे भेदो वर्तत इत्येवोत्तरम्। आत्माश्रयस्तदिति चेन्न—तद्भेदे तद्भेदानङ्गीकारात् । तद्विशिष्टे तद्वृत्तावात्माश्रयः सञ्जात इति चेन्न यद्विशेष्यवृत्ति तद्विशेषणवृत्तीति नियमाभावात्। न हि घटे रूपमित्युक्ते घटत्वेपि रूपमिति वस्तुगतिः प्रतीतिर्वा। "दण्डी पुरुषः कुण्डलीत्युक्ते दण्डेऽपि कुण्डलसम्बन्धः प्रतीयते। तत्र घटत्वदण्डयोरुपलक्षणत्वं न विशेषणत्वमिति" चेत्—तत्राप्यापाततस्तथैवास्तु।

वस्तुतस्तु विशेषणत्वेऽपि न दोषः । प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वे व्यवच्छेदकत्वं स्वकालनियतव्यावृत्तिबोधजनकत्वं वा विशेषणत्वम्। तच्च विशेष्यवृत्तिधर्मानधिकरणतायामपि सम्भवत्येव। तथा च तद्भेदानाश्रितोऽपि तद्भेदस्तद्भेदवताऽऽश्रितो भविष्यति इति न विरोधः। "तद्भेदसम्बन्धात्पूर्वमसम्बद्धः स भेदो विशेषणमपि कथम्। न ह्यसम्बद्धं विशेषणं नानेति" चेत्—भेदस्यान्योन्याभावस्य नित्यत्वेन नित्यसम्बन्धात्तद्भेदसम्बन्धात्पूर्वमित्येव नाङ्गीकुर्मः। "सम्बन्धिनो घटस्यानित्यत्वेन कथं नित्यः सम्बन्ध" इति चेत्—अतीते नाना (१)च प्रतियोगिना विशिष्टप्रतीतिदर्शनात्, विशिष्टप्रतीतेश्च सम्बन्धसाध्यत्वात्। अन्यथा घटस्य प्रागभावो घटस्य ध्वंस इति प्रत्ययो न स्यात्। "तत्किमनुत्पन्नस्यापि घटस्योपरक्तप्रत्ययजननयोग्यत्वमस्तीति" चेत्—कः सन्देहः यावता ज्ञानविषयत्वस्यैव योग्यतावच्छेदकत्वं—तच्चानुत्पन्नस्याप्यस्त्येव। अत्र किं नियमाकमिति चेद्वस्तुस्वभाव एव। वस्तुस्वाभाव्याद्वैपरीत्य-

(१) आदर्शस्थः पाठोऽत्रधृतः। अतीतेन चेति पाठो युक्तः प्रतिभाति।

मेव किं न स्यादिति चेन्न प्रतीतिनियतत्वात्स्वाभाव्यस्य। न ह्युत्पत्स्यते घटो नष्टो घट इति त्वया न प्रतीयते। तथाचानुत्पन्नयोरपि सम्बन्धिनोः समवायः पूर्वमासीदेव।

ननूत्पन्नस्यापि भेदसम्बन्धः सार्वदिकः। परन्तु समवायः सम्बन्धिभिन्नः यस्तु सम्बन्धात्मको ज्ञानविशेषात्मको वेति न किञ्चिदनुपपन्नम्। "समवायोऽपि समविप्रतिपत्तिरिति" चेत्—भवतु नाम। तदर्थमिह न यतिष्यामहे। एवं रूपवति रूपं रसवति रसो गवि गोत्वमित्याद्युपलक्षणत्वविशेषणत्वाभ्यामनुपपाद्यम्।

यद्वा अभिन्ने भेदो वर्तत इत्येवोत्तरम् पूर्वप्रश्नस्य। न हि स्वस्मादपि घटो नाभिन्नः। पटप्रतियोगिको भेदः पटाभिन्ने घटे वर्तते पटभिन्ने वेति विशिष्य प्रश्ने कृते सामान्येन नोत्तरं घटत इति चेत् न अनुक्तमतुल्यस्यैतादृशप्रश्नानुपपत्तेः। विरोधितावच्छेदकप्रकारेणोपस्थापितस्य धर्मिणो विरुद्धप्रकारावच्छेदकप्रश्नस्यादृष्टचरत्वात् न हि भवति प्रश्नो मृण्मयोऽयं घटस्तेजोमयो न वा—ब्राह्मणोऽयं

चैत्रः शूद्रो न वेति। अन्यथा विज्ञानात्मकं ब्रह्म जडं न वा—सुखात्मकं ब्रह्म दुःखात्मकं नवेति पृच्छतो युक्तिशतेनापि त्वया साध्यमाने विज्ञानसुखात्मकत्वे पृच्छानिवृत्तिर्न स्यात् । यदि चाहृदयस्य कदाचिदेवंविधप्रश्नसम्भवे तदेवोत्तरं दत्तमेवान्वेष्टव्यम् ।

भेदः क्व वर्तत इति प्रश्ने यत्र प्रतीयत इत्युत्तरम्। कुत्र प्रतीयत इत्यत्र यत्र वर्तत इत्याद्युत्तरवैचित्र्यं वार्तिकानुसारेण द्रष्टव्यम् ।

दुर्घटवेदान्तिनस्तु खण्डनयुक्त्यैव निराकर्तव्याः । सा च—भेदः प्रतीतो न वा यमधिकृत्य प्रश्न इत्यादि सञ्चारात्मिका । न चैवं सति खण्डनयुक्तीनामेव बलवत्त्वं प्रतिपादितं स्यादिति वाच्यम् । भवतु नाम तथापि तवैवं प्रतिभाशोको मया विजयरूपस्य फलस्य तदानीं तावतैव प्रतिलम्भात्। तत्र निर्णयस्त्वन्मतेनैव वादिभिः सह कर्तव्य इति ।

अस्तु वा प्रतिप्रश्नः। तथाहि अभेदो नाम भिन्ने ब्रह्मणि वर्तते अभिन्ने वा। आद्ये यद् ब्रह्म पूर्वं भिन्नमासीत्तव इत्थं पश्चादभिन्नं स्यादिति विरोधः।द्वितीये

तेनैवाभेदेनाभिन्ने अभेदान्तरेण वा ? आद्ये अंशतः आत्माश्रयत्वम्। द्वितीये अनवस्था । अथ यद्येकदैव सर्वे अभेदाः ब्रह्म परिरभन्ते तदा किमभेदाभिन्ने केऽभेदा वर्तन्त इति तेषामन्योन्यकलहं कः समादध्यात् । अभेदभूयस्त्वाङ्गीकारे भेदः पर्यवसन्न इत्यधिकं दूषणम् ।

अथाभेदो ब्रह्मणि वर्तत इति नाङ्गीकुर्मः परन्त्वभेदस्वरूपमेव ब्रह्म—तथा च नामी दोषा इति चेत्—तर्हि ममाप्यन्योन्याभावोऽत्रं मनाग्विश्राम्यति। स्वरूपभेदास्त्रमादायैव योत्स्ये ।

तथा च घटस्वरूपस्यैव भेदत्वाङ्गीकारे(१) वृत्तिविकल्पमुखमुद्रणमस्तु । अन्यासाकाङ्क्षस्वभावस्य घटस्यैव भेदत्वेऽन्यस्वाभाव्यसाकाङ्क्षस्वाभाव्यं स्यादिति चेत्—ब्रह्मणोप्यभेदस्वभावत्वे घटाभिन्नं ब्रह्मेत्यन्यसाकाङ्क्षतापत्तिस्तुल्या । ब्रह्मत्वेन निरूप्यमाणं ब्रह्म नान्यसाकाङ्क्षम्, अभेदत्वेन तु तन्निरूप्यमाणमन्यसाकाङ्क्षमस्तु।

---

(१) अत्र खण्डनखण्डखाद्ये पृ० १११-१२७ पर्यन्तं काशीस्थ-लाजरससंस्करणं द्रष्टव्यम् ।

को विरोधः । प्रकारभेदमादाय विरोध इति चेत्तर्हि घटत्वेन निरूप्यमाणोऽयासाकाङ्क्षोऽस्तु, भेदत्वेन तु निरूप्यमाणोऽन्यसाकाङ्क्षोऽस्तु प्रकारभेदमादायाविरोधस्य तुल्यत्वात् । केवलं मम घटत्वप्रकारत्वयोर्भेदोऽस्ति तव सोऽपि दुर्लभ इति विशेषः । अभिन्नं ब्रह्म कथमन्यमाकाङ्क्षत इति चेद्भिन्नो घटो भेदो वा कथमन्यमाकाङ्क्षत इति तुल्यम् । कस्मादयं भेदोपरि तव पक्षेऽस्याकाङ्क्षेति चेत् ब्रह्म केनाभिन्नमित्याकाङ्क्षायास्त्वत्पक्षेऽपि सत्त्वात् । भेदस्वरूपश्चेद्घटः तदा भिन्नो घट इति भेदविशेषणिका प्रतीतिः कथमिति चेत् अभिन्नं ब्रह्मेत्यभेदविशेषणिका प्रतीतिस्तवापि कथमिति तुल्यम् ।

ननु घटादिस्वरूपञ्चेद्भेदस्तदा तं तमात्मनि निवेशयेत् । न हि निष्प्रतियोगिकं घटादिस्वरूपं भेदः । तथा सति भेद एव तन्न स्यात् निष्प्रतियोगिकस्य भेदस्य त्वयानभ्युपगमात्, अभ्युपगमे परिभाषापत्तेः । तथा च घटप्रतियोगिकं घटस्य स्वरूपं भेद इत्यर्थपर्यवसानेऽपि पटोऽपि घटस्वरूपं स्यात् । अतो भेदाय तवायासो-

ऽभेदसाधनपर्यवसायीति महातार्किकत्वम् । एवं घटस्वरूपस्य प्रतियोगित्वं पटस्य स्वरूपमित्यनयाऽपि वाचा पटोऽपि घटस्वरूपमन्न एवेत्यभेद इति चेत्—

मैवम् । पटप्रतियोगिकं घटस्य स्वरूपं भेद इत्युच्यमानेऽपि पटःप्रतियोगी यस्येति बहुव्रीहिसमासाश्रयणादेव समस्यमानपदार्थीभूतात्पटादन्यपदार्थे घटो भिन्नत्वेन त्वयैवोपदर्शित इति त्वयैवाभेदापादनस्यापहस्तितत्वात्, समस्यमानपदार्थादन्यस्यैव बहुव्रीह्यर्थत्वात् । न हि चित्रगुर्देवदत्त इत्युक्ते चित्रया गवापि देवदत्तस्याभेदः प्रतीयते किन्तर्हि गोर्विशेषणमात्रम् । प्रकृतेऽपि घटभेदत्वेन घटस्वरूपे निरूप्यमाणे पटस्य विशेषणमात्रमभ्युपेतं नाभेदोपीति । एवं घटस्वरूपभेदप्रतियोगी पट इत्युक्ते कथं घटस्य पटात्मत्वं, पूर्वयुक्तेः सत्त्वात् । तथा च यद्यद्वचनमुच्चार्य त्वया पटस्वरूपे घटो घटस्वरूपे पटोऽन्तर्निवेशनीयः तेन तेन दुर्वचनेनैव तयोर्भेदो व्यवस्थापनीय इति यथा यथा तव भेदनिरासाय प्रयत्नस्तथा तथा धृष्टबालक इव पुरोवर्ती भेद इति ।

अन्यसाकाङ्क्षतापत्तिविभीषिकापि निरस्तैव ।

केयमन्यसाकाङ्क्षता नाम। घटादयो भावा निष्प्रतियोगिका एव चेद्भेदाः स्युस्तदा सप्रतियोगिकाः स्युः,अभाववत्समवायवदिति चेद्भवतु नाम निष्प्रतियोगिकाः। न नः किञ्चिद्बाध्यते। न हि स्वभावाभावत्वेन निरूप्यमाणान्घटादीनपि सप्रतियोगिकान्नाङ्गीकुर्मः। तर्हि अभाववदितरनिरूपणाः स्युः सविकल्पमात्रविषयाश्चेति चेत्—तत्किं सप्रतियोगिकपदार्थस्यायं नियमो यदितरनिरूपणेनैव निरूप्यते? तथा सति प्रमेयत्वाभिधेयत्वादिनापि निरूप्यमाणा अभावसमवायादय इतरनिरूपणमपेक्षेरन्। आत्मानमेवोपालभस्व येनैवं नियममङ्गीकुरुष इति चेत्—न, अभिप्रायनियममविदुषस्तवैवोपालभ्यत्वात्। न वयं सप्रतियोगिकत्वं निष्प्रतियोगिकत्वं वा वस्तुनः स्वाभाविकमेवाङ्गीकुर्मः, किं तर्हि यत्प्रकारावच्छेदेन यज्ज्ञानं नियमतो यद्विशिष्टज्ञानमपेक्षते तत्प्रकारावच्छेदेन तज्ज्ञानं नियमतस्तद्वस्तु सप्रतियोगिकमिति ब्रूमः। तथा च स एव घटो घटत्वेन ज्ञायमानो नियमतो नास्य विशिष्टज्ञानमपेक्ष्य ज्ञायते। ततो घटत्वावच्छेदेन निष्प्रतियोगिक इत्यभिधीयते। अभावत्वेन ज्ञाय-

मानो नियमतोऽभावज्ञानमपेक्ष्यैव ज्ञायत इति तेन सप्रकारेण सप्रतियोगिक एव। यद्यपि वह्नित्वेन वह्नि-ज्ञानमपि कदाचित् धूमज्ञानमपेक्षतेऽनुमितिरूपं, अतो वह्नित्वेन वह्निः सप्रतियोगिक एव स्यात् इत्युक्तो नियम इति। न हि प्रात्यन्तिकमपि वह्नित्वप्रकारकज्ञानापेक्षं येन धूमो वह्नेः प्रतियोगी स्यात्। यद्यपि वह्नित्व-निर्विकल्पकं वह्नित्वविशिष्टज्ञानं नियमतोऽपेक्षते इति वह्नित्वमपि वह्नेः प्रतियोगि स्यात्, तथापि विशिष्ट-ज्ञानमित्यपेक्षणीयज्ञानवैशिष्ट्यं विशेषणमुपात्तम्। अन्यत्र गोत्वाश्वत्वादौ सहानवस्थानरूपविरोध एव प्रतियोगित्वव्यवहारः, क्वचिद्वध्यघातकत्वादिकृत इति यद्येवं तर्हि घटादयो निष्प्रतियोगिकाः, संयो-गादयश्च सप्रतियोगिका इत्यत्र किंकृतो व्यव-हार इति चेन्न यत्पदार्थस्य यदसाधारणं वाच-कपदं तत्र यत्प्रवृत्तिनिमित्तं तत्प्रकारकज्ञानस्येत-रविशिष्टज्ञानसापेक्षत्वनिरपेक्षत्वकृत इति गृहाण। यद्यपि संयोगस्य प्रमेयपदं वाचकं तत्र च प्रमेयत्वं प्रवृ-त्तिनिमित्तं तेन प्रकारेण संयोगज्ञानं न सम्बन्धिज्ञा-नमपेक्षत इति निष्प्रतियोगिकत्वापत्तिः, तथापि प्रमे-

यपदं संयोगस्यासाधारणं न भवतीत्यदोषः। तत्सिद्धमेनद्घटादय एव स्वरूपसिद्धभेदाः तत्त्वेन ज्ञायमानाः सप्रतियोगिका इति पदेन न व्यवह्रियेत इति चेन्न स्वरूपभेदपदस्य स्वरूपत्वेन प्रवृत्तिनिमित्तेन उपलक्षणेन वा प्रवर्तमानस्य स्वरूपत्वावच्छिन्नाशेषव्यक्तिपरस्य प्रकरणसमभिव्याहारादिवशात्तत्र घटादिव्यक्त्युपस्थापकत्वात्। स्वरूपत्वञ्च स्वनिष्ठधर्मात्यन्ताभावासमानाधिकरणधर्मवत्त्वमेव। स्वनिष्ठो यो धर्मः तस्य योऽत्यन्ताभावस्तदसमानाधिकरणधर्मवत्त्वमिति यावत्। अत एव घटस्वरूपं न पटः तस्य घटनिष्ठधर्मात्यन्ताभावसमानाधिकरणधर्मवत्वात्, न वा घटान्तरस्वरूपं घटान्तरं, तत्राप्येकतरधर्मस्य अपरजात्यन्ताभावनैयत्यात्। न च घटनिष्ठसंयोगात्यन्ताभावसमानाधिकरण्यात्तद्घटत्वस्य तद्घटोपि तद्घटस्वरूपं न स्यादिति वाच्यं अत्यन्ताभावपदेन प्रतियोग्यसमानाधिकरणात्यन्ताभावस्य विवक्षितत्वात्। अभावस्यापि यया कयाचिद्वृत्त्या स्वनिष्ठधर्मात्यन्ताभावासमानाधिकरणधर्मवत्त्वस्य विद्यमानतया स्वरूपशब्दवाच्यत्वम्। अतएव स्वरू-

पमित्युक्ते सकलस्वरूपोपस्थितौ विशेषप्रतिपादनाय घटस्वरूपं पटस्वरूपमिति तत्तत्समभिव्याहाराय यत्नः।

अयमेव च धर्मो घटस्वरूपस्य भेदत्वम्। एतत्प्रकारावच्छेदेन ज्ञायमानो घट इतरनिरूपणाधीननिरूपणः। नन्वसंहितोपाधेरुपहितप्रत्ययायोगाद्भिद्यत इति योगं पुरस्कृत्यान्योन्याभावस्वरूपभेदवत्तया घटादिर्भेदः। भेदस्तु भेदनत्वादन्योन्याभाव एवेत्यभिधाने, अभावानामन्योन्याभावविरहिणां भेदवत्त्वाभावाद्भिद्यत इति योगविरहिणां भेदो न स्यादित्यस्माकं स्वरूपभेदोपपादनायास इति।

ननु स्वरूपञ्चेद्भेदस्तदा शुक्तिस्वरूपमेव रजताद्भेदो गृहीत इत्यभेदारोपो न स्यात् न स्याच्च दूरादभिव्यक्तकरचरणादिपुरुषस्वरूपे दृष्टे स्थाणुर्वा पुरुषो वेति संशय इति चेन्मैवम्--न हि भेदमात्रं संशयविपर्ययविरोधि, किं नामारोप्यारोपविषयगतधर्मयोरन्योन्यस्मिन्नभावदर्शनं आरोप्यधर्मस्य आरोप्यविषयगतव्यतिरेकदर्शनं वा आरोप्यधर्माधिकरणारोपविषययोरन्योन्याभावदर्शनं वा

तथैवावधारणात्। तथा च स्वरूपभेद एव ग्रहे संशय-विपर्ययौ न स्यातामिति रिक्तं वचः।

ननु यदि प्रतियोगिना निरूप्यमाणो घट एव भेदः स्यात् तदा केनापि प्रकारेण निरूप्यमाणं नीलमपि पीतं भवेदिति(१)चेन्न आपादकाभावात्। अविरुद्धयोर्घटत्वभेदत्वयोः समावेशवन्नीलपीतत्वयोरपि समावेशः स्यादिति जात्युत्तरत्वात्, व्याप्त्यमूलकत्वात्। तथा च नीलपीतयोर्नीलत्वपीतत्वयोर्वा परस्परपरीहारकत्वं नियमेनास्माभिरङ्गीक्रियते। तथा घटत्वभेदत्वयोश्चेत्त्वयाङ्गीक्रियते तदा तावतैव सिद्धे भेदविवाद एवावयोः पर्यवस्येत्।

यच्चोक्तं भेदोल्लेखस्याभेदोल्लेखनान्तरीयत्वेनाभेदोल्लेख एव ज्ञानस्य प्रामाण्यं न तु भेदोल्लेखांशेऽपीति तद्विपरीतं, अभेदप्रत्ययस्य भेदविषयतानैयत्यात्। न हि भेदमनुल्लिख्याभेदधीः सम्भवति प्रतियोगितया भेदभानावश्यकत्वात्। भेदे च प्रतीयमाने अभेदभानमावश्यकम्। न हि भेदपदाद्भेदे प्रतीयमानेऽभेदप्रथा, तस्यापदार्थत्वात्। सर्वधि-

---

(१) अत्र खण्डनखण्डखाद्ये ११४ पृष्ठे द्रष्टव्यम्।

याञ्च भेदविषयत्वं वैशिष्ट्यविषयतया प्रागेव दर्शितम्। तस्मात्—"अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमेति"(१)मनोरथमात्रमिति।

घटपटौ नाभिन्नाविति प्रतीतौ पारमार्थिकभेदनिषेधोऽपारमार्थिकभेदनिषेधो वा। उभयथापि भेदसिद्धिः। पारमार्थिकस्य हि भेदस्य निषेधे तादृशप्रतियोगिनो नित्यवदन्वयः। अपारमार्थिकनिषेधे च मदभ्युपगम्यमानपारमार्थिकभेदेन निषेधानन्वयादेवाभेदासिद्धिः। अभेदज्ञाने प्रतियोगिप्रमा नापेक्षिता किन्तु ज्ञानमात्रमिति चेत्तर्हि अभेद इत्यप्रमितभेदविरह इत्येवार्थः पर्यवसन्नः। तथा च किं नश्छिन्नम्॥

नन्वभेद इति भेदं न निषेधामः। किं नाम धर्मान्तरमेव ब्रूम इति चेन्न। तद्यदि भेदविरोधि तदा विरोधनिरूपकतयैव भेदसिद्धिः। अथ भेदाविरोधि तदा घटपटयोरभेदनामकं धर्मान्तरं द्रव्यत्वपृथिवीत्वादिवद्यदि प्रतीतिपथमवतरेत् कस्तन्निषेधाय यतेत। प्रतीयत एव प्रतिश्रुतित इति चेन्न

(१) खण्डनखण्डखाद्ये ११२ पृष्ठे द्रष्टव्यम्।

श्रुतीनां भेदविषयतयोपपादनात् ।

किञ्च श्रुतीनां यदद्वैतं प्रतिपाद्यते तत्किंघटादिनिष्ठं उतब्रह्मनिष्ठं, उत स्वरूपम् । आद्ये भेदविरोधि न वा उभयथापि भेदसिद्धेः, एकत्र भेदनिरूपकतयाऽन्यत्र श्रुतिप्रतिपन्नाद्वैतविरोधादेव । अथ ब्रह्मनिष्ठमेवाद्वैतं धर्मान्तरं, तदपि न भेदविरोधि-विरोधित्वाविरोधित्वाभ्यां प्रकाराभ्यां भेदसिद्धेः । अथ ब्रह्मप्रपञ्चोभयनिष्ठमद्वैतं धर्मः श्रुतिप्रतिपाद्यस्तत्रापि भेदविरोधे भेदसिद्धिः तदविरोधे तदसिद्धिः । यथाचोभयमद्वैतं मनुषे तथात्वमपि उभयगतमस्तु । अथ ब्रह्मस्वरूपमेवाद्वैतं श्रुतिप्रतिपाद्यं तदा न नो विवादः—श्रुत्या भेदस्याप्रतिक्षेपात् । अद्वैतं न प्रतिपाद्यते किन्तु द्वैतं प्रतिषिध्यते इति चेद्द्वैतनिषेधो ब्रह्मभिन्नो न वा, आद्ये कथं द्वैतनिषेधः । श्रुत्या ब्रह्मण एव विधेः ।

ननु स्वरूपं भेदस्तदा स्यात् यदि नाना स्वरूपं स्यात् । नानात्वञ्चान्योन्याभाववस्तुभेदः सर्वथाप्यनुपपन्नः । तथा हि अन्योन्याभावस्तादात्म्याभावः । तस्य च तादात्म्यं घटपटयोः

प्रतियोगिवाच्यम् । तस्य च सिद्धमद्वैतम् । असिद्धावत्यन्तासतो न विशेषणत्वम्, नाप्युपलक्षणत्वं सम्भवतीति तद्विशिष्टस्तदुपलक्षितो वा भावप्रत्ययो न स्यात्, अभावप्रतीतावुपलक्षणतया विशेषणतया वा प्रतियोगी वा-तवाभ्युपगमात् न च वाच्यं घटे पटत्वं पटे घटत्वं निषिध्यते, तथा च स एवान्योन्याभावात्मा भेद इत्यभिधीयत इति (१)। एवञ्च सति कः संसर्गाभावादस्य भेदः(२), तथा चाभावचातुर्विध्यव्यवस्थापनबालधन्धस्य त्वयैव स्फुटीकरणात् । न. च घटः पटे पटो घटे घटत्वपटत्वाभ्यामवच्छिद्य प्रतिषिध्यत इति वाच्यम्। एवञ्च सति घटत्वपटत्वयोरवच्छेदकधर्माभावात् तयोरन्योन्यस्मिन्निषेधानुपपत्तेः। अन्योन्याभावाभावादन्योन्यधर्मवत्त्वमन्योन्यस्मिन्निति घटपटयोरभेद एव पर्यवसन्न इति चेन्मैवम्-अभिप्रायानवबोधात्। न ह्यन्योन्यतादात्म्यं प्रतियोगि ब्रूमोऽन्योन्याभावे, येन प्रतियोग्यप्रसिद्धिनिबन्धनं तद्विशिष्टतदुपलक्षितप्रतीत्यनु-

(१) खण्डनखण्डखाद्ये १२८ पृष्ठे द्रष्टव्यम् ।

(२) खडनखण्डखाद्ये ११९, २००-२३५; १५-१६ पृष्ठे द्रष्टव्यम् ।

दयप्रसङ्गः। न वा घटत्वपटत्वयोरेव प्रतियोगित्वमाचक्ष्महे, येन संसर्गाभावप्रवेशप्रसङ्गः, न वा घटपटयोरन्यान्यस्मिन्निषेधात्तादात्म्याभावो व्यवहारात्मा, येन घटत्वपटत्वयोः स्वगतावच्छेदकधर्मविरहस्तयोरन्योन्याभावविरहः स्यात्, किं नाम घटमेव प्रतियोगिनं ब्रूमः। स च यदि संसर्गावच्छिन्नो निषिध्यते तदा संसर्गाभावप्रतीतिः। तादात्म्यावच्छिन्नश्चेन्निषिध्यते तदा तदन्योन्याभावप्रतीतिरिति विशेषः स्यात्।

ननु तादात्म्यस्य प्रतियोगिताऽवच्छेदकत्वेपि अप्रतीतत्वं तदवस्थमेवेति चेन्न—तादात्म्यस्याप्रतियोगित्वात्। घटतादात्म्यं पटे नास्तीति प्रतीतौ तादात्म्यमेव प्रतियोगित्वेन परिस्फुरतीति चेन्न तत्र पटतादात्म्यसंसर्गस्यैव प्रतिषेध्यत्वात्। संसर्गाभावाङ्गीकारात् यत्र घटः पटो न भवतीति नञर्थे घटेन योऽन्वयः तत्र तादात्म्यावच्छिन्नो घट एव प्रतियोगीति संसर्गाभाववैलक्षण्यात् प्रतीतिवैलक्षण्यादेव प्रत्येतव्यवैलक्षण्योपपत्तेः न हि घटः पटो भवतीति घटः पटो वा नास्तीति प्रतीत्योर्वैलक्षण्यं त्वया मया वा

नाङ्गीक्रियते।

किञ्च भूतलवृत्तेरपि घटस्य घटो भूतलं न भवतीति भूतलेऽभावः प्रतीयते । स च न संसर्गाभावः, भूतले घटसंसर्गस्य प्रत्यक्षत्वात्। एवञ्च घटः पटो नास्तीति न तादात्म्याभावः, घटतादात्म्यस्य घटे त्वयाप्यङ्गीकारात् । तस्मादस्त्यनयोरभावयोर्भेदः। स च प्रतियोग्यभेदेपि प्रतियोगितावच्छेदकधर्मभेदप्रयुक्त एवेति युक्तमुत्पश्यामः॥

ननु यदि प्रतियोग्यभेदेऽपि प्रतियोगितावच्छेदकधर्मभेदादभावभेदः स्यात्तदा नेह घटः पृथिवीत्वावच्छिन्नो घटत्वावच्छिन्नप्रतियोगिकश्चान्यो घटस्यैवाभावः स्यादिति चेत्—अस्त्येवात्राभावद्वयम् । परन्तूभयत्रापि संसर्गस्य प्रतियोगितावच्छेदकतया संसर्गाभावव्यपदेशः। नन्वत्र घटत्वपृथिवीत्वाभ्यामेव प्रतियोगिताऽवच्छिद्यते न तु संसर्गेणापि। एवं घटः पटो नेत्यत्र घटत्वमेव प्रतियोगितावच्छेदकं न तु तत्तादात्म्यम्। तथा च केयं प्रतारणा यत्प्रतियोगित्वेन प्रतियोगितावच्छेदकत्वेनाप्रतीयमानावेव तादात्म्य-

संसर्गौं तादात्म्याभावयोः सीमाविवादे नियन्तारा-
विति चेत्—

मैवम्। नेह घट इत्यस्याः प्रतीतेः घटसंसर्गो भूतले नास्तीति नेह घटो वर्तत इत्यादिना विवरणात्। घटः पटो नेत्यस्यास्तु घटात्मा न पटो घटस्वरूपं न पट इत्यादिना विवरणात्। तथा च विवरणविव्रियमाणयोरविशेषात्कथं न संसर्गाभावतादात्म्याभावयोः प्रतीतिः। असति चास्मिन्भेदे अग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रुतिपक्षपातिना त्वया हेतुफलभावोऽपि कथमुपपादनीयः। अन्यथा समासादितदण्डो घटाय न प्रवर्तेत, दण्डात्मनो घटस्यापि तेनासादितत्वात्। दण्डस्य सत्त्वेऽपि घटासत्त्वञ्चेत्तदा तदानींतनविरुद्धधर्माध्यासादेव भेदसिद्धिः, सिद्धस्य करणत्वादसिद्धस्य कार्यत्वात्। असति च भेदे घटमानयेत्युक्ते पटमप्यानयेत्, घटार्थं प्रवृत्तस्तन्तूनप्युपाददीत तन्तुमत्त्वान्मृदमपि नोपाददीत। वाजपेयस्वर्गार्थं कलञ्जमपि भक्षयेत्, वाजपेयकलञ्जयोरभेदात् वाजपेयजन्यस्वर्गकलञ्जभक्षणजन्यनरकयोरप्यभेदात्। गां दद्यादिति विधेः रासभमपि दद्यात्,

गोरासभयोरभेदात्। सुरां न पिबेदिति विधेः क्षीर-मपि न पिबेत्—इत्यादिश्रौतस्मार्तलौकिकबहुवित्त-व्ययायाससाध्यसकलव्यवहारविप्लवः स्यात्। आग-मे चेत्तव श्रद्धा कर्मपरे तदागमप्रतिपाद्यस्वर्गापूर्वादि-पारमार्थिकत्वे कः प्रद्वेषः। को वोपनिषदुपदेशप्रति-पाद्यब्रह्माद्वैतेऽनुरागः। कर्मपरश्रुतिभिः भेदो न प्र-तिपाद्यते येनाभेदप्रतिपादकश्रुत्यासां पारिपान्थ्यं स्यादिति चेत्-स्वर्गापूर्वादयश्चेत्प्रतिपाद्यत्वेन पार-मार्थिकास्तावतैवाद्वैतपारिपान्थ्यम्। अथ स्वर्गादयो-पारमार्थिका एव तदा ब्रह्माद्वैतपारमार्थिकत्वे क-स्ते प्रतिभूः। अथ स्वर्गादयः श्रुतिप्रतिपाद्यत्वात्पा-रमार्थिकाः। भेदस्त्वमीषां श्रुत्यप्रतिपाद्यत्वादपारमा-र्थिक इति चेत्—स्वर्गादयः सन्तु पारमार्थिकाः, श्रुतिप्रतिपाद्यत्वात्, हेतुफलभावोप्यमीषामस्तु पा-रमार्थिकः इन्येतावदेवास्माकमपेक्षितमापाततः। क्र-मेण तु चेद्धेतुफलभावोऽपारमार्थिकत्वरक्षायै भे-दोप्यपेक्षिष्यते तदा रुदन्तमपि त्वामनादृत्य भेदः सेत्स्यति। वस्तुतस्तु भेदस्यैव प्रतिपाद्यत्वं, न तु त्वदभिमताभेदस्यापीति दर्शितं प्राक्।

ननु क एवमाह सद्भेदो नास्तीति किन्तु सकललौकिकव्यवहारधुरीणानां व्यावहारिकभेदोऽस्त्येव, न हि मिथ्यासत्यभेदोऽपि नास्माभिरङ्गीक्रियत इति उच्यते।

किमिदं व्यावहारिकत्वं नाम यस्य ब्रह्मणि विरहो भेदे च सत्त्वम्। ज्ञानरूपव्यवहारविषयकत्वमिति चेन्न इष्टत्वात्, ब्रह्मणि अस्य विद्यमानत्वाच्च ब्रह्मणि विज्ञानविषयत्वं नास्तीति वाक्ये यदि ज्ञान जननीयं तदा ज्ञानविषयत्वमपवर्जनीयम्। अ व्यवहारोभिलापस्तद्विषयत्वं तदिति चेन्न ज्ञानविष यत्वपक्षोक्तदोषापातात्। नयनानयनादिरूपव्यवहा रविषयत्वमेव तत्त्वमिति चेन्न,-अन्योन्याभावरूपे भे तदभावात्।

ननु ज्ञानेच्छाप्रयत्नादिविषयत्वं यद्यपि व्यावहारिकत्वं प्रकृते नोपपाद्यते तथापि वाच्यत्व मेव व्यावहारिकत्वं पारिभाषिकमिति केचित्। बाध विपरीतप्रमा, तद्विषयत्वमेव बाध्यत्वमिति यदा तद त्वयैव प्रमाविषयत्वेन प्रामाणिकत्वमुपपादितम् अथ भ्रमविषयत्वं बाध्यत्वं तदा भेदः पारमार्थि

क इति ज्ञाने त्वया भ्रमत्वेनाङ्गीक्रियमाणे पारमार्थिकत्वांशेऽबाधनात्, भेदस्याबाध्यत्वमित्यायातम्। 'धर्मिणि सर्वमभ्रान्तं प्रकारे तु विपर्यय' इत्यभ्युपगमात्। तथा च भेदत्वेन भेदो न बाध्यत इति सिद्धम्। अन्यथा ब्रह्मापारमार्थिकमित्यपारमार्थिकत्वे बाधे ब्रह्मणोपि बाध्यत्वं स्यात्। अथ घटो भिन्नइति ज्ञानं भ्रान्तं तत्र च प्रकारो भेद एव, अतस्तस्य बाध्यत्वमिति चेन्न—घटपटौ भिन्नाविति ज्ञाने प्रात्यक्षिकश्रौतोपपत्तिकबाधानां निरासात् निरसिष्यमाणत्वाच्च, क्वचित्काले क्वचिद्विषये भेदस्य बाध्यत्वेऽपि सर्वत्राबाध्यत्वात्। न हि सार्वत्रिको बाधस्त्वया शक्योपपादनः। अबाध्यत्वेनाशक्यव्यवस्थापनत्वमेव व्यावहारिकत्वमिति चेन्न—तस्य ब्रह्मण्यपि समानत्वात्। तस्य श्रुतिप्रतिपाद्यत्वादेव बाध्यत्वव्यवस्थितिरिति चेन्न—भेदस्यापि श्रुतिप्रतिपाद्यत्वोपपादनात्। भेदग्रहे केषामपि कदापि कुत्रापि बाधो नास्तीति कथं त्वया ज्ञायते, येन भेदस्य बाध्यत्वं मन्यसइति चेत्त्वद्व्यवस्थाप्यमानबाध्यत्वव्यवस्थाविरहादेवाबाध्यत्वसिद्धेः। अस्यां कथायां

त्वमेव व्यावहारिकोपपादकतायामारूढोऽसि । यत्र तु बाधविरहोऽस्माभिर्व्यवस्थापनीयस्तत्र येन प्रकारेण ब्रह्मसाक्षात्कारस्य बाधविरहस्त्वयोपपाद्यः स एव चेदस्माभिरुपपादयितुं शक्य एतावतैवास्माकं जयित्वे व्यवहरिष्यसि ।

ननु ब्रह्माभिन्नत्वमेव व्यावहारिकत्वमिति चेत्, न—एतादृशव्यावहारिकत्वस्यास्मदपेक्षितत्वात् तदभिन्नत्वेन ब्रह्मणोऽपि व्यावहारिकत्वस्य सुवचत्वात् ब्रह्मभिन्नत्वस्य त्वयाऽभ्युपगम्यमानस्य पारमार्थिकत्वेन सिद्धत्वाच्च । असत्यांशे व्यावहारिकमिति चेत् । असत्यत्वमिति बाध्यत्वं चेत् तदा उक्तोत्तरम् । अप्रामाणिकत्वञ्च प्रमाणगोचरत्वोपपादनेनैव निरस्तम् । अलीकत्वं विधिनिषेधव्यवहारत्वोपपादनेनैवापास्तम् । असत्त्वं व्यावहारिकत्वमिति चेत्—तत् तद्यदि सत्तायोगित्वं तदा न मन्यामहे अन्योन्याभावस्य सत्तायोगित्वानभ्युपगमात् । स्वभावत्वमेव सिद्धमिति चेत् न इष्टत्वात् । भावप्रतियोगित्वमिति चेत् न इष्टत्वादेव । मिथ्यात्वमेव व्यावहारिकत्वमिति चेत्—मिथ्यात्वं प्रामाणिकत्वं यदि

तदा उक्तम् । मिथ्यापदाभिधेयत्वञ्चेत् तत् अस-ङ्केतेनैव सङ्केतेन वा ? नाद्यः, तस्य ब्रह्मण्यपि सु-वचत्वात् । न द्वितीयः, तत्सङ्केतग्राहककोषव्या-करणादौ भेदपदपर्यायत्वेन मिथ्यालीकादिपदा-नामननुशासनात् । अमोक्षात्मकत्वमेव व्यावहा-रिकत्वमिति चेत्, न, इष्टत्वात्, आत्यन्तिकदुःखा-भावस्य मोक्षतयाऽन्योन्याभावभिन्नत्वात् । मोक्षो-पायज्ञानाविषयत्वं व्यावहारिकत्वमिति चेत् न—श्रव-णमनननिदिध्यासनादीनां मोक्षोपायज्ञानानां श-रीरात्मभेदविषयत्वात् । भेदज्ञानार्थमेव हि श्रवणा-दीनामुपयोगः । सप्रतियोगित्वमेव व्यावहारिकत्व-मिति चेत् न इष्टत्वात् । अद्वैतविरोधित्वमेव व्याव-हारिकत्वमिति चेत् न इष्टत्वात्, वैपरीत्यस्यापि सुवचत्वात् । प्रपञ्चान्तर्गतत्वं चेद् व्यावहारिकत्वं तदा प्रपञ्चबहिर्गतत्वेन ब्रह्मण एव किं न व्यावहा-रिकत्वं स्यात् प्रपञ्चत्वस्याप्येवं विकल्प्य कदर्थ-नीयत्वाच्च । अविद्यादशावेद्यत्वञ्चेद्व्यावहारिकत्वं तदा किञ्चिदनिष्टम् वैपरीत्यञ्च सुतराम् । अवि-द्याविषयत्वं व्यावहारिकत्वमिति चेत् न किञ्चित्

तथात्वेप्यपारमार्थिकत्वान्नतेः । जडत्वं व्यावहारिकत्वमिति चेत् तद्यदि ज्ञानभिन्नत्वं तदनुजानीमः। अथात्मभिन्नत्वं तथापि नानिष्टम् । युक्तेनावेद्यत्वमेव व्यावहारिकत्वमिति चेत् न, इष्टत्वात्।

अभेदस्य पारमार्थिकत्वे युक्तिदशायां कथं न वेद्यत्वमिति चेत् न, वेदनविरहादेव । ब्रह्मणस्तदा कथं वेद्यत्वमिति चेत् इतरस्माद्व्यावहारिको भेद इति तवाङ्गीकारो न किञ्चिदनिष्टमापादयति । केवलं पारमार्थिकत्वं व्यावहारिकत्वमिति ब्रह्मप्रपञ्चयोर्धर्मद्वयं प्राचीनैर्वृद्धवेदान्तिभिः शरमुष्टिन्यायेन बोधितम् । अर्वाचीना अपि वेदान्तिनो व्यामुग्धा एव वर्तन्ते । वस्तुतः प्रमाणसिद्धतया ब्रह्मप्रपञ्चयोर्विशेषो नास्त्येव।

व्यावहारिकत्वादेव प्रपञ्चस्य पारमार्थिकत्वम्। तथा हि भेदः पारमार्थिकः व्यावहारिकत्वात् यन्न पारमार्थिकं तन्न व्यावहारिकं यथा ब्रह्माद्वैतं नचायं न व्यावहारिकः तस्मात् पारमार्थिक इति व्यतिरेकी। यद्वा पारमार्थिकत्वापारमार्थिकत्वाभ्यां विवादपदं भेदः पारमार्थिकः,व्यावहारिकत्वात्, यद्यद्व्या-

वहारिकं तत्तत्पारमार्थिकं, यथा ब्रह्म, पारमार्थिकत्वव्याप्यव्यावहारिकत्ववाँश्चायं तस्मात् पारमार्थिकः। साधनविकलो दृष्टान्त इति चेत् न, ब्रह्मणोऽपि व्यावहारिकत्वस्य प्रमाणसिद्धत्वात्। व्यावहारिकत्वं हि व्यवहारगोचरत्वं, तच्च ब्रह्मण्यस्ति ब्रह्मेत्यभिलापरूपव्यवहारसत्त्वात् ज्ञानरूपव्यवहारसत्त्वाच्च। त्वन्मते घटाद्यात्मनो ब्रह्मणो नयनादिरूपव्यवहारसत्त्वाच्च। ब्रह्म न व्यावहारिकमित्यन्ततो निषेधरूपव्यवहारस्यापि त्वयाभ्युपगमात् व्यावहारिकत्वानिषेधे व्यावहारिकत्वानयने सिद्धमेव। यथा यथा व्यावहारिकत्वनिषेधो ब्रह्मणि तथा तथा व्यावहारिकत्वमवारणीयमेव। अव्यावहारिकं कथं व्यावहारिकं स्यादिति चेत् आत्मानमुपालभस्व येन स्फुटतरं व्यवहारं ब्रह्मणि पश्यन्नपि अव्यावहारिकत्वमभ्युपैषि।

एकमेवाद्वितीयं ब्रह्मेति श्रुतिरपि अद्वितीयत्वादिना रूपेण ब्रह्म व्यवहरणीयमित्येतत्परम्। तथा च दृष्टान्ते साध्यवैकल्यं प्रथमानुमाने गतम्।

तर्हि व्यतिरेकव्याप्त्यभावादिति चेत् न, त्वन्मतेन तत्र व्यतिरेकसत्त्वात्।

यद्वा भेदः पारमार्थिकः, वेद्यत्वात्, यद्यद्वेद्यं तत्तत्पारमार्थिकं, यथा ब्रह्म, तथा चायं, तस्मात्तथा। वेद्यत्वञ्च वेदनविषयत्वम्। तच्च त्वन्मते ब्रह्मण्यस्त्येव।

भेदः प्रमाविषयः, ज्ञानविषयत्वात्, यदेवं तदेवं, यथा ब्रह्म, तथा चायं, तस्मात्तथा। शुक्तिनिष्ठत्वेन ज्ञाने रजतत्वे व्यभिचार इति चेत् न, रजतत्वस्य प्रमाविषयत्वात्। रजतत्ववैशिष्ट्यं शुक्तौ भासते, तच्च न पारमार्थिकमिति चेत्, न-रजतत्ववैशिष्ट्यस्य रजते पारमार्थिकत्वात्। तर्हि रजतज्ञानं शुक्तौ कथं भ्रम इति चेत् न व्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगितया विशेष्यावृत्तिप्रकारतया विशेष्यनिष्ठात्यन्ताभावप्रतियोगिधर्मप्रकारविषयताप्रतियोगिज्ञानतया न सद्विषयतया वणिग्वीथ्याद्यर्थभूतरजतत्वस्य स्मरणे सति शुक्ताविन्द्रियसन्निकृष्टायां शुक्तिरजतयोर्भेदग्रहाभावे सामग्रीवशात्तादृशारोपसम्भवात्। तथा च नैयायिकानां ज्ञेयत्वप्रमेयत्वयोरविनाभाव एवेति न व्यभिचारः।

ननु रजततादात्म्यं शुक्तौ नास्ति तथाचासदेव वैशिष्ट्यं भासत इत्यङ्गीकरिष्यस इति चेत्-तत् किं

-रजनतादात्म्यस्य क्वचिदभावोऽस्तीत्येव तस्यापारमार्थिकत्वम् । तथा च तादृशमपारमार्थिकत्वं घटपटादीनां सर्वेषामप्यङ्गीकुर्म इति दुर्मतेस्तवालम्पीडया। को हि घटादीनां नाभावाप्रतियोगित्वमङ्गीकरोति ।

एतेन स्वप्नदृष्टाद्भुतानां तरङ्गप्रसङ्गानुभूतचन्द्रभेदादीनामपारमार्थिकत्वमभ्युपगच्छता तद्दृष्टान्तावष्टम्भेन जागरावस्थानुभूयमानानां घटपटभेदानामपारमार्थिकत्वानुमानं न किञ्चिदनिष्टमापादयतीत्यवधातव्यम् । स्वप्नदृष्टमसदपि भासत इति पक्षोऽस्माभिर्नाङ्गीक्रियत एव येन दृष्टान्तावकाशस्तव स्यादिति।

घटः पटनिष्ठान्योन्याभावात्यन्ताभावरहितः पटत्वप्रतियोगिकात्यन्ताभाववत्त्वात्, यन्न घटत्वप्रतियोगिकान्योन्याभावात्यन्ताभावरहितः न तत्पटत्वप्रतियोगिकात्यन्ताभाववत्, यथा पटः, न च नायं पटत्वप्रतियोगिकात्यन्ताभाववान्, तस्मात् पटत्वप्रतियोगिकात्यन्ताभाववत्त्वादयं न च न पटनिष्ठान्योन्याभावात्यन्ताभावरहितः। घटः पटनिष्ठान्योन्याभावप्रतियोगी, पटत्वप्रतियोगिकात्यन्ताभाववत्त्वात्, यथा पटः। न चायं पटत्वप्रतियोगिकात्यन्ताभाववान्, त-

स्मात्पटत्वप्रतियोगिका(?)...ये अन्योन्यधर्मात्यन्ताभाववती ते अन्योन्यभेदवती, यथा विद्याविद्ये, अन्योन्यभेदवत्त्वव्याप्यान्योन्यधर्मात्यन्ताभाववन्तौ चेमौ, तस्मादन्यौ भेदवन्तौ। घटत्वं पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणं, पटत्वसमानाधिकरणधर्मत्वात्, यन्न पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणं नासौ पटत्वासमानाधिकरणधर्मः यथा पटत्वम्, न चैतन्न पटत्वासमानाधिकरणधर्मः, तस्मात् पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणमिति व्यतिरेकी ।

घटवद्भूतलं घटप्रतियोगिकाभावाधिकरणम्, घटत्वप्रतियोगिकाभावाधिकरणत्वात्, यत् घटत्वप्रतियोगिकाभावाधिकरणं तद्घटत्वप्रतियोगिकाभावाधिकरणम्, यथा घटः, घटत्वप्रतियोगिकाभावाधिकरणं चैतत्, तस्मात् घटप्रतियोगिकाभावाधिकरणम्। अतः पक्षविशेषणमहिम्ना संसर्गाभावबाधेऽन्योन्याभावसिद्धिः ।

एवं घटवत्कपालं पक्षीकृत्यैतदेव साध्यम्।

एवं रूपं स्वसमानकालीनस्वप्रतियोगिकाभावस-

मानाधिकरणं, गुणत्वात्, संयोगवत् । रसादीनामपि पक्षसमत्वान्न व्यभिचारः ।

एवं संयोगमेव दृष्टान्तीकृत्य वृत्तिमत्पदार्थपक्षकमनुमानं प्रयोक्तव्यम् । व्यभिचारस्तु पक्षसमोक्त्या निरसनीयः ।

प्रपञ्चः सत्यः, दृश्यत्वात्, यन्न सत्यं तन्न दृश्यं, यथा ब्रह्माद्वैतं, नचायं दृश्यः, तस्मात्सत्यः । शुक्तौ रजततादात्म्यं दृश्यमपि न सत्यमिति व्यभिचार इति चेत्, न, तस्यापि सत्यत्वात्। साधितं च तत्सत्यत्वम् ।

प्रपञ्चः पारमार्थिकः, अभिधेयत्वात्, यद्यदभिधेयं तत्तत्पारमार्थिकम्, यथा ब्रह्म, पारमार्थिकत्वव्याप्याभिधेयत्ववाँश्चायम्, तस्मात् पारमार्थिकः।

स्वप्नानुभूतप्रपञ्चोऽपि सत्य एवेत्यवधेयम्।

भेदादिज्ञानं सद्विषयकं, ज्ञानत्वात्, यद्यज्ज्ञानं तत्तत्सद्विषयकं यथा ब्रह्मज्ञानम्, सविषयकत्वव्याप्यज्ञानत्ववच्च(१) विवादविषयभेदादिज्ञानं, तस्मात्सद्विषयकम् ।

---

(१) अत्रादर्शपुस्तके सविषयत्वस्याज्ञानत्वाच्चेति पाठो दृश्यते ।

ननु स्वशिरश्छेदादित्यादिगिलनाकाशप्लवनोर्वश्याद्यप्सरस्सम्भोगसमुद्रतरणमहेन्द्रादिविजयसुमेरुशिखरसमारोहणैरावतारोहणादिकमपि निद्राविद्रावितेन्द्रियगणः पुरुषः पश्यति तदपि त्वया पारमार्थिकमेष्टव्यम्। एवञ्चेन्नूनं तर्ककर्कशशेमुषीकोऽसि येन तदानीन्तनजागरानन्तरभाविबाधव्यतिरेके सत्यपि नान्यथा मन्यस इति चेत्—

कः सन्देहः। परं तात्कालिकबाधेन स्वशिरश्छेदादीनां तज्जन्मनि परमभावमवधारयामः। न तु जन्मान्तरेऽपि त्वदुदाहृतं सर्वं नासीदित्यङ्गीकुर्मः। तत्कालेऽपि वा पुरुषान्तरस्य नास्तीति निष्टङ्कयामः। अतएव तत्तदाकर्ण्य निद्राणस्तथाऽनुभवति। तस्माज्ज्ञायमानपारमार्थिकयोः समनियमवादिनो नैयायिकाः स्वप्नविषयान् व्यभिचारस्थलत्वेनोदाह्रियमाणानपि त्वया गजनिमीलिकयाऽवधीरयन्तो मनागपि बिभ्यतीति।

ननु यथा ब्रह्म तथा प्रपञ्चोऽपि रासभादिः। तथा चैवं मन्यमानस्य तव नास्तिकेभ्यो न विशेषमवधारयाम इति चेत्—यो रासभादिभिन्नं ब्रह्म

मन्यते यश्च सत्त्वाभिधेयत्वप्रमेयत्वादिना रासभ-तुल्यं ब्रह्म स्वीकरोति, तयोः कतरो नास्तिक इति त्वमेव परिभावय। प्रपञ्चाद्भिन्नत्वेन ब्रह्म जानीही-त्येतदर्थमेव ममायमायासः। तर्हि प्रपञ्चात् ब्रह्म कथमभ्यर्हितं येनोपनिषदां ब्रह्म ब्रह्मेति घोषणेति चेत्-ब्रह्मसाक्षात्कारः साक्षादेव दुःखोच्छित्तिरूपपर-मपुरुषार्थोपयोगी न तु प्रपञ्चसाक्षात्कार इति बोध-यितुम्। न तु ब्रह्मैव साक्षात्प्रपञ्च इति ख्यापयि-तुमित्यलमभिनिवेशेन।

ननु यदि श्रुतेस्तथैव तात्पर्यं तदा व्यासः कथमेवं नाज्ञासीद्यथाऽसूत्रयदिति चेत्—ब्रह्मस्तुति-त्वेन। न हि ब्रह्मस्तुतावपि मम विद्वेषः। प्रपञ्च-मिथ्यात्वसाधनं परं न सहामहे।

पूर्वानुमानादि अद्वैतप्रतिपादकागमबाधात् कथं द्वैतप्रमां जनयिष्यतीति चेत्—आगमबाधो हि आगमवाक्यजन्या साध्यविपरीतप्रतीतिः। सा च सत्या न वा? आद्ये कथं बाधः—तयैव सत्यया द्वैतप्रमासम्भवात्। न हि साध्यविपरीतप्र-तीतिमात्रं बाधः, किन्तर्हि साध्यप्रमा, सा चेदस्ति

द्वितीया, कथं साऽद्वैताभावप्रमारूपो बाधः, आगमजनिताप्यद्वैतबुद्धिर्न सत्या, तर्हि स्वतः पारमार्थिकत्वस्यैव साध्यत्वात् । अथ विरोधोऽस्तु वेद्यत्वादीनां हेतूनां पारमार्थिकत्वाभावव्याप्यत्वादिति चेत्-मैवं, वेद्यत्वस्य ब्रह्मणि पारमार्थिकेऽपि गतत्वात् । तत्र वेद्यत्वं नास्ति किन्तु स्वयमेव तत् वेदनात्मकमिति चेत्—ब्रह्मणि वेद्यत्वं नास्तीत्यत्र ब्रह्मपदेन ब्रह्मोपस्थाप्यते न वा ? आद्ये त्वेकत्वेनैव वेद्यत्वम् । अन्त्ये ब्रह्मणि वेद्यत्वनिषेधस्त्वया कर्तुं न शक्यः वेद्यत्वनिषेधकेन वाक्येन ब्रह्मणोऽनुपस्थापनात् । ब्रह्म वेदनत्वान्न वेद्यमित्यनुमानपक्षेऽपि पक्षोपस्थितौ वेद्यत्वमपवर्जनीयम् । पक्षानुपस्थितौ वेद्यत्वमवर्जनीयं, निषेधाभावात् ।

नन्वस्तु सत्प्रतिपक्षः । तथा हि प्रपञ्चो मिथ्या. वेद्यत्वात्, शुक्तिरजततादात्म्यवत् । भेदो न पारमार्थिकः, व्यावहारिकत्वात्, तरङ्गप्रसङ्गानुभूतचन्द्रभेदवत् । पटादयो न पारमार्थिकाः (१)जातत्वात्, शशशृङ्गवदिति चेत्—मैवं; प्रथमा

(१) 'जडत्वात्' इति पाठान्तरम् ।

नुमानस्य ब्रह्मणि व्यभिचारित्वात् दृष्टान्तस्य साध्यविकलत्वात् । साध्यञ्च यदि अपारमार्थिकत्वं तदा साध्याप्रसिद्धिः । अथ व्यावहारिकत्वमेव, तदा सिद्धसाधनं कदाचित् कस्यचिद्भ्रमविषयत्वाङ्गीकारात् । न हि भ्रमविषयत्वं प्रमाविषयत्वविरोधि एकत्रैव रजतत्वे उभयदर्शनात् ।

अथ प्रमाभूतज्ञानाविषयत्वमेव मिथ्यात्वं तर्हि साध्याप्रसिद्धिः । अथ सदसद्भ्यामनिर्वचनीयत्वमेव मिथ्यात्वं तर्हि नायं वस्तुदोषः अपि तु तव निर्वचनाशक्तिरिति । यदि निर्वचनं समीहसे तदास्मदाराधनाय यतस्व । त्वयाऽपि निर्वक्तुं न शक्यत इति चेत्—तवोन्मत्तस्य पुरस्तादेवमेव । अथ सत्त्वासत्त्वपक्षे दोषदर्शनादनिर्वचनीयत्वमेव प्रपञ्चस्यावधारयाम इति चेत्-अनिर्वचनीयत्वेऽपि दोषं पश्यसि न वा ? आद्ये बाधमवधारितवानसि । न चेत्-तदाऽनिर्वचनीयत्वेनैव वास्तवेन धर्मेण व्यवस्थितः प्रपञ्चो ब्रह्मभिन्नतया व्यवस्थाप्यत इत्यद्वैतपक्षाय त्वयैव दत्तो जलाञ्जलिः । अथानिर्वचनीयत्वमप्यपारमार्थिकमेव तदा

मदभिमतं निर्वचनीयत्वमेव त्वया प्रपञ्चस्य सम्पादितमिति न विवादः। अथ निर्वचनीयत्वमनिर्वचनीयत्वमित्युभयाभाववत्त्वमेव प्रपञ्च इति सिद्धो भेदः। अथ विरोधादेवमपि नाङ्गीकरोमि निर्वचनीयत्वानिर्वचनीयत्वयोः परस्परविरहव्यापकतया परस्परविरहात्मतया वाऽन्यतरस्यावश्यकत्वादिति चेत्-तर्हि तेनैव प्रकारेण व्यवस्थितः प्रपञ्च इति सर्व एव पक्षा इष्टा इति।

ननु नाप्यसत्त्वं न सत्त्वं न सदसत्त्वं नानिर्वचनीयत्वं नोभयाभाववत्त्वं नान्यतरवत्त्वम्। अत एव प्रपञ्चोक्तिरिति चेत्-तर्हि दुष्टत्वमेव पारमार्थिकम्। एतावतैवादुष्टा ब्रह्मणो भेदसिद्धिः। दुष्टत्वमिति न पारमार्थिकमिति चेत्-अदुष्टत्वं तर्हि पारमार्थिकत्वमित्यायातम्। अत एव प्रपञ्चस्य ब्रह्माभेदं मन्यामहे। अदुष्टत्वेनैकत्वादिति चेत्-न केवलमदुष्टत्वेनैक्यम्। किन्तर्हि? सत्वेनाभिधेयत्वेन प्रमेयत्वेन ज्ञेयत्वेन धर्मत्वेन च रूपेण प्रपञ्चब्रह्मणोर्भेदो नास्तीति ममाभ्युपगम इति मुण्डो भव। तर्हि भेदः कथमिति चेत्-अवान्तरतद्धर्मवत्तयेति गृहाण।

अथ मिथ्यात्वं धर्ममेव किञ्चित् प्रमेयत्वादिवत् पारमार्थिकं साधय सत्प्रतिपक्षेण तर्हि मत्साध्यभेदाविरुद्धतया सत्प्रतिपक्षस्तावदय न भवतीत्यलं कलहेन ।

ननु विपक्षबाधकतर्कशून्यत्वात् सन्तु व्याप्यत्वासिद्धाः सर्वे हेतव इति चेत्--न, लौकिकवैदिकव्यवहारविप्लवरूपविपक्षबाधकतर्कस्य पूर्वमेव दर्शितत्वात् । भवतु वा व्यवहारविप्लवः किं नश्छिन्नमिति चेत् एवमिष्टमनिष्टकोटौ निवेशयतः परपराजयादप्यविभ्यतो निर्लज्जस्य स्वक्रियास्ववचनादिव्याघातादयोऽपि दोषाः प्रतिभाशोभायै नालङ्ग्रामीणा इति सचेतसामुपेक्षैवेत्यलमनेन ।

नन्वस्तूपाधिरेव कश्चिदिहानुपलभ्यमानोऽपि शङ्क्यमानः एतावताऽपि हेतवः सन्दिग्धव्यापकाः साधनाय न पर्याप्ताः। तथा चोक्तम्'—'यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते, विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्'' इति चेत्—मैवम् । तवोपाध्युद्भावनं यद्यसाधकत्वसाधनाय तदा तत्रापि शङ्क्यमानो भ्रष्टतया स्वकार्य्याक्षमत्वेनोपाधिरुप-

न्यस्यमानस्तथैव साध्यं साधयिष्यति । अथेदमसाधकं शङ्कितोपाधिग्रस्तत्वादित्यहेतुः शङ्क्यमानोपाधिरप्यसाधकत्वं साधयतीति मतं तदा ( भेदस्था ) पनानुमानमपि तथैव साध्यं साधयिष्यतीति न हि मां प्रत्येव दोषा दोषाः ।

ननु सुहृद्भावेन पृच्छामि—शङ्कितोपाधिः कथं नानुमानमाकुलयति । यदि वाद्युपन्यस्तसाध्यव्यापकत्वेनानिर्णीतः साधनव्यापकत्वेन सन्दिग्धः साधनव्यापकत्वेन वा निर्णीतः साधनव्यापकत्वेन सन्दिग्धः कश्चिद्धर्म्मः प्रतीतिपथमवतरति तदा सन्दिग्धोपाधिर्दोषो भवत्येव। तन्निरासाय चानुकूलस्तर्क एव पटीयान् । यत्र तु सहचारदर्शनव्यभिचारादर्शनाकूलतर्कैर्व्याप्तिः परिच्छिन्ना तत्रापि शङ्क्यमानोपाधेर्दोषत्वे धूमादिना वह्न्याद्यनुमितिरपि तव न स्यात्तथा चेष्टसाधनतानुमितिरपि न स्यादिति निवृत्तिप्रत्य(१)यानुदये निरीह जगज्जायेतेति कण्टकोद्धारः।

किञ्चाद्वैते श्रुतिः प्रमाणं प्रमाणान्तरमपि

( १ ) 'प्रत्येवा' इति पाठ आदर्श पुस्तके ।

वास्ति। यदि श्रुतिः प्रमाणं तदा तस्यापारमार्थिकत्वमभ्युपेयम् । न ह्यपारमार्थिकात्पारमार्थिकं ज्ञानमुपेतुमर्हति । अपारमार्थिकात् स्वप्नकामिनीसंसर्गात् चरमधातुविसर्गः पारमार्थिकोऽस्तीति चेत्-स्वप्नानुभूतकामिनीतत्संसर्गयोस्तदा बाधेऽपि पारमार्थिकस्योपपादितत्वात् । असन्निकृष्टकामिनीतत्संसर्गयोरभावे तज्ज्ञानाददृष्टाददृष्टसंस्कारादिसहकृतादुत्पद्यमानश्चरमधातुविसर्गः पारमार्थिकहेतुक एवेति। कामिन्यसत्त्वात्तद्विषयकं ज्ञानमपि कथं सदिति चेत्-तद्विषयकज्ञानसत्त्वात् कामिन्या एव कथमसत्त्वमिति तुल्यम्। कामिन्यास्तत्र स्फुट एव बाध इति चेत्-बाधाच्चेदसत्त्वं तदा स्वप्नकामिनी नोपलब्धेत्यपि तव विपरीतज्ञानमुत्पद्यते येनानुभवस्यापि तथैवासत्त्वमवधारितवानसि। यद्यप्यापाततः कामिनीज्ञानबाधस्तदा विशेषणस्य कामिन्या बाधे तद्विशिष्टानुभवोऽपि बाधित एवेति चेत्--एवं सति भावि पुत्रज्ञानमपि तत्काले पुत्रासत्त्वे नासत् स्यात् । तत्र भावित्वेनैवोपलभ्यते । तच्च तथैवेति कथं स्यात् । असन्निकृष्टां कामिनीं सन्निकृष्टत्वेन गृह्णन्ननुभवः कथं

सदित्यङ्गीकर्त्तुं शक्येतेति चेत् । एतावतैवापराधेनायं भ्रान्त इत्युच्यते यत्किलातद्देशामतत्कालामपि कामिनीं परमार्थसतीं तद्देशत्वेन तत्कालत्वेन गृह्णाति न त्वलीकविषयतया । तथा चासत्या श्रुत्या परमार्थसत् ज्ञानं जननीयमित्यप्रमा श्रुतिरद्वैते। यच्च श्रुत्या जननीयं तत्सदसद्वा? आद्ये द्वैतमेव। द्वितीये चासत्त्वेन घटादिभेदज्ञानेन समं श्रुतिज्ञानस्याविशेषात् द्वैतमपारमार्थिकम्। अद्वैतञ्च पारमार्थिकमित्यनुरागकृत एव भेदः ।

इतस्तु दूषणोपक्रमा कथा । प्रपञ्चस्यापारमार्थिकत्वं यत्त्वयाभ्युपगम्यते तत्र पारमार्थिकत्वापारमार्थिकत्वयोर्द्धर्म्मयोर्भेदमभ्युपैषि न वा ? आद्ये भेदः सिद्ध एव । अन्त्ये पारमार्थिकत्वापारमार्थिकत्वयोरन्यतरब्रह्मप्रपञ्चयोरन्यतरस्मिन्विधीयमानं कथं नोभयोरुभयधर्म्मवत्त्वमापादयिष्यति । तथा च प्रपञ्चपारमार्थिको ब्रह्मपारमार्थिक इत्यनिष्टमुभयत्रापाद्यते । पारमार्थिकत्वापारमार्थिकत्वयोर्व्यावहारिको भेदोऽस्तीति चेत्-अत एव पारमार्थिकाभेदप्रसङ्गनिबन्धनो दोषः । तदा प्रपञ्च-

स्यापारमार्थिकत्वं यत्तदेवापारमार्थिकत्व तस्य ब्रह्मणो वा यत्पारमार्थिकत्वं तदेव प्रपञ्चस्यापारमार्थिकत्वमिति वृथा तत्साधनायायासो वेदान्तिनाम् ।

भेदाभेदयोर्भेदोऽस्ति न वा ? आद्ये सिद्धो भेदः । द्वितीये यत्तव दर्शने भेदखण्डनं यच्चाभेदसाधनं तदभेदसाधनमिति मदानुकूल्यं त्वयैव सम्पादितम् । द्वैतमपारमार्थिकमित्ययमेव द्वैताद्वैतयोः पारमार्थिकतापारमार्थिकत्वे धर्म्मौ यदि परमार्थसन्तावभविष्यतां तदा सिद्ध एव भेदः। प्रतियोग्यनुवृत्तिधर्म्मयोः त्वयैव पारमार्थिकत्वप्रतिपादनात् ।

अपि च भेदाभेदयोर्भेदोऽस्ति न वा ? आद्ये सिद्धो भेदः । द्वितीये तयोर्न्निवर्त्यनिवर्त्तकभावानुपपत्तिः । विद्ययाविद्यया निवृत्तावपवर्ग इति तव मतम् , तच्चाभेदेऽनुपपन्नम् । व्यावहारिकस्तु भेदो निरस्त एव ।

अपि च क्षेत्रज्ञपरमात्मनोर्भेदोऽस्ति न वा ? आद्ये सिद्ध एव भेदः । अन्त्ये चिदानन्दमयस्य परमात्मनो दुःखमयत्वात् सर्वज्ञत्वशरीरित्वविरोधः। उपाधिभेदादेवं स्यादिति चेत्-उपाधिभेदस्य पारमार्थिकत्वस्य त्वयानभ्युपगमात् । अभ्युपगमे वा किमप-

राद्धमुपधेयभेदेन । उपधेयभे(१)दो हि पारमार्थिको नास्ति व्यावहारिक इति चेत्--किमुपाधिभेदः पारमार्थिकः सोऽपि व्यावहारिक एवेति चेत्-तर्त्कि ब्रह्मणः क्षेत्रज्ञस्य च परमार्थतो भेदे क्षेत्रादिसम्बन्धस्तस्य पारमार्थिक एव क्षेत्रादिसम्बन्ध एव नास्ति। परमार्थिकः सन् किं ब्रह्मणि तदभेद आपाद्यते चेत्-तर्हि मुक्त्यर्थं ब्रह्मचर्य्यादिखेदमनुभवतस्तव किं निवारणाय यत्नः । अपारमार्थिकक्षेत्रज्ञादिसम्बन्धनिरासायेति चेत्--शशशृङ्गादिनिर्विशेषस्य क्षेत्रादिसम्बन्धस्यानुकूल्यप्रातिकूल्ययोरसमर्थस्य निराकरणे यत्नानर्थक्यात् । निवृत्तिरपि क्षेत्रज्ञादीनामपारमार्थिक्येव यदि तदा सुतरामायासवैफल्यम् । क्षेत्रज्ञादिसम्बन्धापारमार्थिकत्वज्ञानमेव तत्त्वज्ञानं तदुत्पादनाय च योगाभ्यासवैफल्यमिति चेत्--एवं सति सत्यज्ञानविषयत्वेन क्षेत्रादिसम्बन्धबाधाभावः । असत्येन ज्ञानेन बाधायोगात् ।

अथ यन्मते श्रुतिबुद्धिःसत्या भवतु सत्यत्वात्स्यादेव बाधात्मिकेति चेत्-मम मते सत्याद्वैतबुद्धिर्न्नास्त्येव।

(१) 'भेदोऽपि पारमार्थिकत्वम्' इति पाठ आदर्शपुस्तके ।

तर्हि एकमेवाद्वितीयं ब्रह्मेति वाक्यं ज्ञानं न जनयत्येव। क एवमाह—न जनयत्यपि तु ब्रह्मणि ब्रह्मप्रतियोगिको भेदो नास्तीत्येतादृशं ज्ञानं न जनयेदेतत् घटपटादिसाधने बाधकं न भवति भिन्नविषयत्वात्। सर्वाद्वैतज्ञानं ममोत्पन्नं यच्च तव ब्रह्मणि ब्रह्माभेदविषयकं ज्ञानमुत्पन्नमनयोः कतरत्प्रमेति सन्देहोऽस्तीति चेत्-तर्हि सुतरां बाधः। न हि सन्दिग्धप्रामाण्यमपि ज्ञानं बाधकं परन्तु सन्देह एव नास्ति तदभ्युपगम्यमानतादृशश्रौतज्ञानस्य त्वयाऽपि प्रामाण्याङ्गीकारात्। त्वत्प्रतीतिस्तु यदि प्रमा-तदा नाद्वैतप्रमा, अथाप्रमा तथाऽपि नाद्वैतप्रमेति कूटफक्किकायैव बाधव्युदासः।

नन्वस्तु साध्याविशेषः। हेतुसाध्ययोर्भेदाभावात्तत्र यदि साध्यं सिद्धं साधनं वा सिद्धं तदा तदात्मनो हेतोरप्यसिद्ध्या स्वरूपासिद्धिरिति चेत्—

मैवम्। व्यावहारिकभेदेन त्वयाभ्युपगम्यमानेन हेतुना सकलाभासव्युदासः। तेन भेदः सिध्यन् पारमार्थिको भूत्वा सेत्स्यतीत्यदोषात्। ननु हेतूनामसत्त्वादेव स्वरूपासिद्धिरस्तु न हि

हेतूनतो वयमङ्गीकुर्म्म इति चेत्--तर्ह्यसिद्धिरप्यसती कथमनुमानमपहस्तयिष्यति। सती चासिद्धिस्त्वया मर्म्मपीडयाऽपि नाङ्गीकर्त्तव्या। असत्याप्यसिद्ध्या असाधकत्वं वास्तवं सेत्स्यतीति चेत् तर्ह्यसताऽपि हेतुना साध्यं वास्तवं सेत्स्यतीति न दोषः। मया च दुःखसिद्धिर्दोषत्वेन मन्यते--सा नास्त्येव प्रकृते--येन मद्दिशापि दोषोऽनवकाशमासादयेत्। एतेनाश्रयासिद्धिहेतुसाध्ययोर्भेदे सति व्याप्तिः स्यात्। सा च व्याप्त्यैव साधनीय इति दुर्घटमिति चेत्—

मैवम्। आपाततस्तदभ्युपगम्यमानव्यावहारिकभेदमादायैव व्याप्तिसिद्धेः। वस्तुगत्या भेदज्ञानं व्याप्तिजनकं व्याप्तिज्ञानजनकं वा? नाद्यः। व्याप्तेर्भेदज्ञानजन्यत्वानभ्युपगमात्। न द्वितीयः। साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यवत्कत्वज्ञानस्य भेदज्ञानानुपजीवकत्वात्। अभ्युपेत्य ब्रूमो यो यो धूमवान् स स वह्निमानित्याकारेण गृह्यमाणाया व्याप्तेरभेदज्ञानस्यैवोपयोगात। अत एव साधनसमानाधिकर-

णान्योन्याभावप्रतियोगिसाध्यवत्कत्वमित्येवाभेदगर्भां व्याप्तिं वर्णयन्ति ।

नन्वस्तु सिद्धसाधनं व्यावहारिकस्य भेदस्य सिद्धत्वादिति चेत्--न, भेदम्पक्षीकृत्य पारमार्थिकापारमार्थिकञ्च ज्ञानं तद्विषयं पारमार्थिक इत्यायातम् (?)। तथा चाद्वैतं नानुपपन्नमिति चेत् । न श्रुत्या जनितज्ञानानां ब्रह्मणो नित्यानित्यविकल्पकबलादपरित्यागात् । तस्माद्वेदान्तिनां मुमुक्षाऽप्यसतीति प्रवृत्तिरप्यसती मोक्षज्ञानमप्यसत् विद्याऽप्यसती योगाभ्यासोऽप्यसन्नभेदोप्यऽसन्न वेति साधु तीर्थिकत्वाभिमानः। स्वर्गापूर्वादीनान्तु सत्त्वसङ्कथाऽपि नास्ति। ब्रह्मभिन्नप्रमाणस्यासत्त्वेन ब्रह्माप्यप्रामाणिकमेवेति भवन्तु वेदान्तिनः स्वस्थाः ।

अद्वैते किं प्रमाणमित्यत्राद्वैतं प्रतीतं न वा(१) ? आद्ये प्रश्नानुपपत्तिः । न ह्यप्रतीतदेवदत्तो देवदत्तः श्यामो गौरो वेति पृच्छति । द्वितीये सा प्रतीतिः प्रमा न वा यत्तां प्रति करणन्तदेवाह द्वैते प्रमाणमित्यवेहि । अन्त्ये अद्वैतप्रमां प्रति किं प्रमाणमिति

(१) अत्र खण्डनखण्डखाद्ये ८२-८७ पृष्ठेषु द्रष्टव्यम् ।

प्रश्नार्थः । तथा च विरोधे पराघातादेव खण्डन-मनुपपन्नम् । अद्वैते पृच्छतो नैयायिकस्याद्वैतं प्रतीतमेव न हि घटाद्वैतं घटे नास्ति ब्रह्माद्वैतं ब्रह्मणि न वा कथन्तर्हि घटाद्वैतं पटवृत्ति न वा स्यादिति मदिष्टस्यैव त्वया ज्ञापितत्वात् । सम्पादितत्वादिति भेदाभेदाभ्यां तृतीयः प्रकारो न सम्भवत्येव । "परस्परविरोधेन न प्रकारान्तरस्थितिरिति" त्वयैव व्यवस्थापनात् । तस्माद्भेदो नास्त्येवेति चेत्—

मैवम् । न भिन्नत्वेन प्रतियोगिग्रहो नाप्यभिन्नत्वेन, किं तर्हि घटादिना । एवमधिकरणस्यापि परस्परविरोधश्च न प्रतीतौ किन्तर्हि वस्तुस्वाभाव्ये वस्तुनो भिन्नत्वमभिन्नत्वं वेत्यतः प्रकारान्तरं न सम्भवतीति ब्रूमः । प्रतीतिस्तु न सामग्रीवशात् कदाचिद्भिन्नत्वेन कदाचित्पृथिवीत्वेन द्रव्यत्वेन सत्त्वेन वेति न किञ्चिदनुपपन्नम् ।

अथ यदि प्रतियोगिप्रतीतावपि भेदाभेदयोरेकतरप्रकारोन्तर्भवतीति तव ग्रहस्तदा अभेदेन प्रतीतः प्रतियोगिभेदे निरूपक इति गृहाण--आ-

सेऽप्य निषिध्यत इत्यस्माकं सिद्धान्तरहस्यात्। इदं रजतमित्यारोपानन्तरं नेदं रजतमिति भेदाग्रहात् तत्र स्वरसबाह्यारोपोऽन्यत्र त्वाहार्य्य इति विशेषः। घटः पटो न भवतीति हि प्रतीतिस्तथा च घटः पट इत्यारोप्यत्वे प्रमात्वे वेति निषेधप्रतीतिः। यद्येवं तदाऽभेदांशस्यारोपत्वं निषेधभागस्य प्रमात्वं कथं यावता वैपरीत्यस्यापि सम्भवादिति चेत्—

न, प्रवृत्तिसम्बादिना भेदग्रहस्य प्रामाण्यावधारणात्। घटभिन्नत्वेन गृहीतस्य घटस्य जलाहरणादीनां पटकार्य्यविलक्षणकार्य्याणामवधारणात्। रजताभिन्नत्वेन गृहीतायाश्च शुक्ते रजतकार्य्यकटकमुकुटादीनामदर्शनादभेदग्रहस्याप्रामाण्यावधारणात्। तस्माद्घटत्वादिना प्रकारेण गृहीते प्रतियोगिनि स्मृते वा पटत्वादिना प्रकारेण गृहीतेऽधिकरणभेदेनाभेदात्मना संयुक्तविशेषणातायामिन्द्रियप्रत्त्यासत्तौ सत्यां भेदप्रतीतिरिति युक्तमुत्पश्यामः।

किञ्च भेदप्रतीतौ न तवापि विप्रतिपत्तिर्य्येन तव तत्सामग्रीवैकल्योद्भावनं घटते किन्तु सा प्रतीतिरप्रमेति तवाभ्युपगमः। प्रमेत्यस्माकम्। तथा च

भेदग्रहसामग्रीवैकल्योद्भावनस्य स्वोत्पत्तिसामग्रीवैक-ल्यविभावनस्येव तवोपहासजनकमिति ।

ननु भेदग्रहणपूर्वकं वा वस्तुग्रहणं वस्तुग्रहपूर्वकं वा भेदग्रहणं,भेदवस्तुनोर्वा युगपदेव ग्रहणम् ? आद्ये प्रतियोगिग्रहाधीनो भेदग्रह इति सिद्धान्तव्याकोपः । भेदस्य निष्प्रतियोगिकस्य ग्रहणाशक्यतया विशेषणतया प्रत्यासत्त्या ग्राह्यो भेदस्तथा च वस्तुनो ग्रहे किं विशेषणीभूतो भेदो भासते । द्वितीये तु प्रथमं अभिन्नतया सद्वस्तु गृहीतं तत्पश्चात् कथमिव भिन्नतया गृह्येत । तृतीये तु वस्तुग्रहणं भेदग्रहणं प्रति कारणमिति तवाभ्युपगमः । स च भेदवस्तुनोर्युगपद्ग्रहे व्याहन्येत तत्कार्य्यकारणयोर्यौगपद्यायोगात्, यौगपद्ये वा सव्येतरविषाणवत्, कार्य्यकारणभावानुपपत्तिः । तस्माद्भेदग्रहो नास्त्येवेति चेत्—

मैवम् । घटत्वपटत्वादिना प्रकारेण प्रतियोग्यनुयोगिनोर्ग्रहणानन्तरं भेदप्रमेत्युक्तत्वात् । अकुटिलवचनैरेव तव सन्तोषस्तदा स्वतः कृतविकल्पाश्रयाभ्युपगम एव भेदग्रहधारावाहिकस्थले भेदपूर्वकमेव वस्तुग्रहणम् । वस्तुग्रहपूर्वकञ्च पूर्वोत्तरज्ञानयोरुभय-

विषयत्वादुभयग्रहस्योभयग्रहानन्तर्य्यात्। अन्यत्रापि यत्र भेदवस्तुनोर्युगपदेव ग्रहणं निर्विकल्पकेनापि विशकलितयोर्युगपदेव न हि भेदग्रहः क्वचिदपि वस्तुविषयः अवच्छेदकधौव्यात् । किन्तु भेदग्रहस्य पूर्ववस्तुग्रहः केवलोप्यस्तीत्यन्यदेतत्, कारणत्वन्तु तस्यैव पूर्ववर्त्तित्वादित्यन्योन्याभावभेदग्रहे स्वरूपभेदे तु विकल्प एव नावतरति तस्य वस्तुस्वरूपत्वात् । वैधर्म्ये तु सविकल्पकेन ग्रहे युगपदेव ग्रहणं निर्विकल्पकेनापि विशकलितयोर्युगपदेव ग्रहणमुपाधिरूपवैधर्म्यग्रहे तु तत्सामग्रीसमावेशवशाद्यथायोगं त्रयमपीत्यलं भूतविकल्पेषूत्तरोत्तरवैचित्र्येणेति, व्यावहारिकभेदग्रहे यादृशी तव सामग्री सैव पारमार्थिकभेदग्रहेऽप्यस्माकमित्येवोत्तरं सर्वत्र भेदग्रहसामग्रीवैकल्योद्भावनावसरे विधेयमुत्तरोत्तरयुक्तिप्रतिसन्धानविधुराणां पुरस्तात् ।

ननु वैधर्म्यभेदो न भवति । तथा हि-घटपटयोर्घटत्वपटत्वरूपस्य वैधर्म्यस्यापाततोऽङ्गीकारेऽपि तयोस्तादृशधर्म्मान्तराभावादभेदानुपपत्तावभेदपर्य्यवसाने तदा लिङ्गितयोर्घटपटयोरप्यभेदपर्य्य-

वसानात्। घटत्वपटत्वयोरपि तादृशधर्म्मान्तराङ्गीकारेऽनवस्थापात इति चेत्—

न, घटत्वेन पटत्वेन स्वत एव विलक्षणेन घटपटयोर्भेदसिद्धौ घटपटरूपाश्रयात्मकवैधर्म्येण घटत्वपटत्वयोरपि भेदात्। एवं सत्यन्योन्याश्रय इति चेत्—न, घटपटयोर्भेदग्रहावसरे घटत्वपटत्वयोरपि भेदग्रहणस्यानावश्यकत्वात्। न हि घटत्वावच्छेदेन गृह्यमाणं घटत्वं प्रतियोगितावच्छेदकं घटत्वाच्छेदेन गृह्यमाणं घटत्वम्वाऽधिकरणतावच्छेदकमित्यभ्युपगम्यतेऽस्माभिः। किन्तर्हि स्वरूपत एव गृह्यमाणे घटत्वपटत्वे वास्तवभेदवतां प्रतियोगिनमधिकरणञ्चावच्छिन्त इति ब्रूमः।

ननु यदि घटत्वपटत्वयोस्तदानीन्तनो भेदग्रहो नापेक्षितस्तदा घटत्वमेव प्रतियोगिनमधिकरणञ्चावच्छिन्द्यात्। तथा च घटोऽपि घट(१)भिन्नो गृह्यतेति चेत्—कः सन्देहो यदि भिन्नः स्यात्। कथं न भिन्न इति चेत्—न, कदाचिद्भिन्नत्वेनाग्रहात्। कथं न ग्रह इति चेत्—न, ग्राह्याभावादिति। वस्तु—

(१) आदर्शपुस्तके 'पटभिन्नः' इति पाठः।

तस्तु वास्तवभेदवत्वेन प्रतियोग्यधिकरणतावच्छेदकधर्म्मयोर्विशेषितत्वात् । स एव वास्तवो भेदः । कथं गृह्यतेति चेत्—भिन्नयोराश्रयोरेव वैधर्म्यात् । तथा चान्योन्याश्रय इत्युक्तमिति चेत्—न, अन्योन्यभेदग्रहकालेऽन्योन्यभेदग्रहस्यानुपजीव्यत्वात् ।किन्तु घटत्वे समवेतधर्म्माभावेऽपि घटेतरावृत्तित्वे सति सकलघटवृत्तित्वादेर्धर्मस्याङ्गीकारात् । एवं तत्र तत्रापीति अनवस्था स्यादिति चेत्—न, अस्तु(?) परन्तु घटपटभेदग्रहकाले तेषामपि धर्माणां ग्रहो नापेक्ष्यते येनानवस्थामूलक्षतिः स्यात् । तावता धर्माणामङ्गीकारे सप्तपदार्थव्याकोप इति चेत्—न, यदा यदा यस्य धर्मस्य त्वया सप्तपदार्थाय बहिर्भावःशङ्कनीयः तदस्माभिरमीषामेव पदार्थानामन्योन्यविशेषणविशेष्यभावापादनेन साक्षात्सम्बन्धपरम्परासम्बन्धस्वरूपसम्बन्धैः सप्तपदार्थमेवाभिनिवेशनीय इति सिद्धो वैधर्म्यभेदः ।

ननु सत्यामद्वैतश्रुतौ कथं भेदप्रत्यक्षमभिमतविषयं स्यात् । प्रत्यक्षेणैव बलवता श्रुतिजबुद्धिर्बाधनीयेति चेत्—बाध्यतां समाने विषये, न हि

घटपटौ भिन्नाविति प्रत्यक्षं घटपटयोरिव श्रुतिजधिया समं स्वस्याभेदं गृह्णाति । तथा च तत्र न स्वपदा श्रुतिरद्वैतं बोधयन्तीति प्रत्यक्षश्रुतिजधियोरभेदे त्वबाध्यबाधकभाव इति चेत्—

मैवं, भेदग्राहिप्रत्यक्षस्य श्रुतिजधिया सममद्वैतेन केवलं त्वदभीष्टसिद्धिरपि तु ममाप्यभीष्टमेवं सेत्स्यत्येव यावता सकलानुभूयमानभेदप्रत्यक्षस्य श्रुतिजधिया बाध्यत्वस्य त्वयैवोपपादितत्वात् ।

ननु घटपटभेदाग्राहिण्या धिया घटपटयोरभेदः परस्परग्राह्यो न तु घटात्पटस्याऽपि तत्र तत्स्यात् । स्वप्रकाशरूपत्वेऽप्यशक्तेः स्वप्रकाशतया स्वविषयश्च भासते न तु स्वविषयात् । स्वप्रतियोगिको भेदोपीति नैयायिकैः स्वप्रकाशताया अनभ्युपगमात् । तथा च घटपटयोः स्वभेदग्राहिप्रत्यक्षेण श्रुत्याऽभेदसिद्धे तदभिन्नाभिन्नतया घटपटयोरप्यभेदोऽवर्जनीय इति चेत्—

मैवम् । यावता वैपरीत्यस्यापि सम्भवात् । तथा हि दृढतरप्रत्यक्षेण घटपटयोर्भेदे गृहीते घटभिन्नपटभिन्नबुद्धेरपि घटभेदसिद्धिरेवं पटभिन्नघटा-

भिन्नबुद्धेरपि पटभेदप्रत्यक्षश्रुत्या कलुषीकृतप्रमाणः कथमुत्तरबुद्धिधाराभेदसाधकं स्यादिति चेत्—त्वदभिमतपरया श्रुतिरपि सन्दिग्धप्रमाण्या कथं प्रत्यक्षं बाधत इति तुल्यम् ।

ननु घटभिन्नत्वं घटे प्रत्यक्षसिद्धं बुद्धौ न त्वयाऽभ्युपगम्यते । तथा च घटभिन्नाभिन्नतया बुद्धेः कथं भेद इति चेत् । तर्हि तत्कुतो घटाभिन्नाभिन्नमपि हेतुः पटेऽस्माभिर्नाङ्गीक्रियते । न घटपटयोरभेदः सिद्ध्येत । एवञ्च यथा तदभिन्नत्वे भिन्नत्वेन त्वया भेदः साध्यः । तत्र तत्र तु भिन्नाभिन्नतया मया भेद एव साधनीय इत्यर्थभेदस्य प्रत्यक्षसिद्धतया तदुत्तरोत्तरबुद्धिधाराभेदेऽपि वज्रकराल इत्येव—

'आद्यधीवेद्यभेदीयाप्यऽन्यथाऽनुपपन्नता ।
स्वज्ञानापेक्षणादन्ते बाधते नाद्यश्रुतिम्'(१)।

इति ककुत्कार(?)मात्रेण त्वद्गाथाऽस्माभिरपि पठनीया ।

नन्वस्तु प्रतिवन्दिग्रहः । स्वरूपान्तरबुद्धिव-

---

(१) खण्डनखण्डखाद्ये पृ० १०२ द्रष्टव्यम् ।

द्विचार्यतां घटपटभेदग्राहिधिया समं घटपटयो-र्भेदः कथं ग्राह्यो यदि बुध्यन्तरेण तदा तत्राप्यनुयोग-स्तदवस्थः, एवमुत्तरोत्तरबुद्धिधारानुसरणेन च बुद्ध्याऽपि समं भेदाग्रहे तत्र पदमारोप्य श्रुतिपूर्वपूर्वविषयपर्य्यन्तमद्वैतं सामञ्जयिष्यत्येवेति चेत्—

मैवम् । अनयोर्भेदो न गृहीत इति यदेव त्वयोदाहरणीयं तयोस्तद्वाक्येनैव प्रमाणेन तदानीमेव भेदाग्रहो न ह्यनयोरिति त्वद्वचनात् द्वित्वं न भासते, अनेन समं भेदो न गृहीत इत्यभिधाने च सुतरां भेदग्रहः सममित्यस्य भेदोपस्थापकत्वात् । वादिवाक्यत्वेन मद्वाक्यं प्रमाणमेव न भवतीति चेत्—न्विषयाबाधादेव प्रामाण्याभ्युपगमात् । तर्ह्यनयोरभेद इति मम वाक्यादभेद एव प्रतीयतामिति चेत्—

न, तत्रायोग्यतया परस्परव्याघातात् । अनयोरित्यभिधायि द्वित्वात्मिकत्वान्वयस्य बाधितत्वात् । एवञ्च श्रुतिपदारोपणार्थं पूर्वं···परित्यज्य यदेवोत्तरं त्वयोदाहर्त्तव्यं तत्र स्वरूपवैधर्म्यान्योन्याभावभेदानां द्वित्वद्विपृथक्त्वपृथिवीत्वादीनां वा निवृत्तौ नाद्वयाम्नायैः पार्ष्णिग्राहैर्विजातीयत इति नञ्द्वयपूरणेन त्वद्गा-

थैव नः पक्षेऽपि, किञ्च घटपटयोः प्रत्यक्षेण भेदे गृहीते क्रमेण तयोरप्यभेदपर्य्यवसानं न तावत् श्रुत्या त्वयैव श्रुतेस्तद्विषयपरीहारेण प्रवृत्त्यभ्युपगमात्। तद्भिन्नत्वाभिन्नत्वादीनामपि हेतूनां प्रत्यक्षबाधादेव तत्राप्रवृत्तेः। उत्तरोत्तरबुद्धिधारायाः प्रत्यक्षताभेदो न गृह्यत इति घटपटयोरपि भेदो मास्त्विति जात्युत्तरभेदः। न हि उत्तरोत्तरग्राहि प्रत्यक्षोपजीवकं घटपटभेदकुहरलीनं भेदं सर्वथाप्यग्राहि प्रत्यक्षं तद्भिन्नसामग्रीनिबन्धनोत्पत्तिनिमित्तविषयाबाधाच्च प्रमाभूतन्तत्परिहारे विषयान्तरे वर्त्तमानयापि श्रुत्या बाधितुं न शक्यते। तथा च घटपटौ विहाय जगदभेदं बोधयतु श्रुतिः घटपटभेदप्रत्यक्षकुहरलीनं भेदं सर्वथा न स्कन्दितुमीष्टे। एवमुत्तरोत्तरधारायामपि यत्र यत्र भेदो ग्राह्यस्तत्र तत्र पुनः श्रुतेः प्रवृत्तिरसम्भाविनी दैक्षापशावहिंसाश्रुतिरिव तथा च—

आद्यधीवेद्यभेदीयाप्यन्यथाऽनुपपन्नता।
स्वज्ञानापेक्षणादन्ते बाध्यते नाद्ययागमैः॥

इति त्वद्गाथावैरूप्यमस्तु।

किञ्च यद्यावयोरभेदस्तदा जानीहि मम हृदि

सम्प्रति किमस्ति । न ज्ञायते शरीराद्यवच्छेदकभेदादिति अवच्छेदकभेदमङ्गीकरोषि चेदवच्छेद्यभेदे कस्तव द्वेषः । सोऽप्यस्तु व्यावहारिक इति चेत्-तत्किमवच्छेदकभेदः पारमार्थिकस्तथा च जितमस्माभिः । अवच्छेदकभेदोऽप्यपारमार्थिक इति चेत्-तर्हि कथं मम हृदयं न जानासि ब्रह्माभिन्नसर्वम् । अतस्तव हृदि ब्रह्मास्ति चेत्-नूनं उषरात्मासि त्वमेवं ब्रह्मजानानोपि नापवृज्यसे । अविद्याकलनात्तथा न जायत इति चेत्-अविद्यां ब्रह्मभिन्नां मन्यमानः कथं वा न लज्जसे । नन्वस्तु भेदोऽस्माभिः परं नाङ्गीक्रियत इति चेत्-नन्वस्तु भेद इत्यङ्गीकारादेव भेदाङ्गीकारोऽपि प्रतियोगिनो भेदस्यावश्याङ्गीकरणात् । तस्मात्—

एकं भेदास्त्रमादाय नान्यद्गणयतः क्वचित् ।
आस्ते न धीरधीरस्य भङ्गः सङ्गरकेलिषु(१) ॥

किञ्च सर्वाभ्यर्हितस्य परमात्मनो यदितरै राक्षसादिभिर्भिन्नत्वेन ज्ञानं भवति तदा श्रवणमनन-

(१) अत्र खण्डनखण्डखाद्ये पृ० १०९ द्रष्टव्यम् । तत्र खलु 'भेदास्त्रं' इत्यस्य स्थाने 'ब्रह्मास्त्र'मिति पाठः ।

निदिध्यासनादौ श्रुतिबोधिते मोक्षमाणप्रवृत्तिरुचिता। अन्यथा तदभिन्नत्वेन प्रतिपन्ने परमात्मनि यत्किञ्चित्साक्षात्कारोऽधुना वृथाऽपीति वृथा योगाभ्यासादिक्लेशस्तदुपदेशो वेत्यवश्यं भेदज्ञानमनुसरणीयम् । अत एव शरीरादिभिन्नत्वेनात्मज्ञानमेव तत्वज्ञानम् । तथा च—

धीधना ! बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ।
क्षेप्तुं चिन्तामणिं पाणि—लब्धमब्धौ यदीच्छथ(१)॥

इति तुल्यैव गाथा ।

एवं सिद्धे पारमार्थिके भेदे आत्मनां भेदाय प्रयुज्यते—आत्मत्वं नानावृत्ति, जातित्वात्, घटवत्, देवदत्तात्मा चैत्रात्मवृत्त्यन्योन्याभावप्रतियोगी, चैत्रवृत्त्यत्यन्ताभावप्रतियोगिधर्माधिकरणत्वात्, यन्नैवं तन्नैवं, यथा चैत्रात्मा । नायं चैत्रवृत्त्यत्यन्ताभावप्रतियोगिधर्माधिकरणं, तस्मात् चैत्रान्योन्याभावप्रतियोगीति व्यतिरेकी ब्रह्मचैत्रादिभिन्नं, अनित्यज्ञानाधिकरणत्वात्, यदेवं तदेवं, यथा घटः, अनित्यज्ञानाधिकरणञ्चैतत्, तस्मात् चैत्रादिभिन्नम् ।

(१) अत्र खण्डनखण्डखाद्ये पृ० १३४ द्रष्टव्यम् ।

अहं ब्रह्मप्रतियोगिकपारमार्थिकभेदाधिकरणं, सुखाद्यत्यन्ताभावविरोधिधर्माधिकरणत्वात् । एवं दुःखद्वेषभावनाधर्माधर्म्मादिप्रत्येकात्यन्ताभावाधिकरणधर्मवत्वं साधनीकर्त्तव्यम् । अनित्यज्ञानात्यन्ताभावविरोधिधर्मानधिकरणत्वात्, नित्येच्छानधिकरणत्वात्, अनित्येच्छात्यन्ताभावविरोधिधर्माधिकरणत्वात् । एवं दुःखद्वेषभावनाधर्माधर्मादिप्रत्येकात्यन्ताभावानधिकरणत्वात्, यदेवं तदेवं, यथा ब्रह्म, न चायं तथा, तस्मात्तथा ।

ननु नित्यज्ञानाद्यधिकरणत्वं न ब्रह्मणः किन्तु तद्रूपत्वमेव, श्रूयते हि 'नित्यं ज्ञानमानन्दं ब्रह्म' इति चेत्-यदि ब्रह्माभिन्नं सर्वं तदाऽनित्यज्ञानेच्छादिरूपत्वमपि तस्य किं नाभ्युपैषि । 'नित्यं विज्ञानमानन्दं ब्रह्मे'-ति श्रुत्या नित्यज्ञानसुखात्मकतामात्रं प्रतिपादयन्त्या दुःखादिरूपताप्रतिक्षेपादिति चेत्-तत्किमे-'कमेवाद्वितीयं ब्रह्मे'-ति श्रुतिगवीं हन्तुमुद्यतोऽसि, यया दुःखाद्यात्मकत्वमपि ब्रह्मणः प्रतिपाद्यते ।

अस्तूभयरूपत्वं ब्रह्मण इति चेत्-तर्हि सु-

खलोलुपतया दुःखात्यन्ताभावस्वरूपमुक्तिवादिनमुपहससि स्त्वयञ्च दुःखमयीं मुक्तिमङ्गीरोषि इति नूनमुन्मत्तोऽपि त्वया जितः । यद्यपि ब्रह्मणः सुखदुःखोभयरूपत्वं तथाऽपि मुक्तिदशायां सुखमात्राभिव्यक्तिरूपत्वं न तु दुःखाभिव्यक्तिरूपत्वमपीति कथं दुःखमयी मुक्तिरिति स्यात्। श्रूयते हि 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठित'-मिति चेत्-मुक्तौ तत्किं स्वरूपमपि हीयते। तथा च सुखरूपताऽपि कथं स्यादिति । एवमनियमे वा कथं निश्शङ्कः प्रवर्त्तेत । श्रुत्यवष्टम्भादेवेति चेत्-श्रुतीनामेव त्वद्दिशा परस्परकलहात् ।

तर्हि श्रुतीनां का गतिः । 'नित्यं विज्ञानमानन्दं ब्रह्मेति' श्रुतेस्तावदयमर्थः-विशिष्टं ज्ञानं यस्येति विज्ञानं ज्ञानस्य च नित्यतैव विशेषः । आनन्दः सुखं तद्यस्यास्तीत्यानन्दं मत्वर्थीयेन । एवं सति नपुंसकलिङ्गताप्युपपद्यते । एतच्चापरब्रह्मस्वरूपकथनम्। 'द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव चे'त्यत्र किमपरं ब्रह्मेत्याकाङ्क्षाबलात्। तथा चानन्दं आनन्दवत्त्वं, ब्रह्मणोऽपरब्रह्मणो, रूपं स्वरूपं, चो

हेतौ । यतो मोक्षे जीवन्मुक्तिदशायां, तत्प्रतिष्ठितं व्यवस्थितं, जीवन्मुक्तिदशायां परमानन्दसाक्षात्कारादित्यर्थः । अन्यथा ब्रह्मणो नित्यत्वे सुखमपि नित्यमितीदानीमपि साक्षात् क्रियेत। ब्रह्मस्वरूपस्य सुखस्यानित्यत्वमसम्भावितमेव। नित्यस्यापि सुखस्याविद्यादशायां नाभिव्यक्तिरिदानीमिति चेत्-तत्किमविद्यायां निवृत्तायां निवृत्ते शरीरेन्द्रियादौ नित्यसुखसाक्षात्कारः। सुखमुत्पद्यते पूर्वं सन्नेव वा साक्षात्कारः।स्वाभिन्नं सुखमिदानीं न विषयीकरोति, मोक्षदशायां करोतीति मतम्। आद्ये, तस्य साक्षात्कारस्योत्पादचिन्ता तावदास्ताम् । तस्य भावस्य तस्य निवृत्तौ पुनः संसारापरावृत्तिरावश्यकी। उत्पन्नोऽपि ध्वंसवदविनाशीति चेत्-तर्हि ब्रह्मभिन्नत्वेन कथं नाद्वैतभङ्गः। ब्रह्माभिन्नत्वेन कथमुत्पादः। द्वितीये, तु साक्षात्काराभिन्नस्य नित्यस्य सुखस्य कोऽग्रे विषयीभाव इति त्वमेव परिभावय । अविद्यानिवृत्तिरेव विषयीभाव इति चेत्—तस्या एव किं निवर्त्तकम्। ब्रह्मसाक्षात्कारः सर्वामेव चिन्तां निवर्त्तयत् पूर्वं नासीदिति चेत् तत्किं ब्रह्माभिन्नं ब्रह्मापि नासीत्

ब्रह्मभिन्नः साक्षात्कारो विरोधिनीमविद्यां निवर्त्तयतीति चेत्—स साक्षात्कारस्सत्यश्चेत्—कथं न द्वैतम्। असत्यश्चेत्कथं न निवर्त्त्यनिवर्त्तकभावो विपरीत एव भवेत्। तस्मात् ब्रह्म परमेश्वर इत्यनर्थान्तरम्।

तच्चापरब्रह्मणः क्षेत्रज्ञादस्मदादेर्भिन्नं नित्यज्ञानेच्छाप्रयत्नाधिकरणं सुखदुःखभावनाधर्माधर्मद्वेषादिरहितं जगत्कर्तृसंहर्तृ चेति। एतद्बोधनायैव उपनिषदवतारोऽपि। तथा च शरीरादिभिन्नत्वेन क्षेत्रज्ञस्यसाक्षात्कारः श्रवणमननिदिध्यासनादेरनन्तरभावी सवासनमिथ्याज्ञानोन्मूलनव्यापारः समानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसरूपं जनयित्वा निवर्त्तते। अदृष्टनाशात्स्वजन्यसंस्काराद्दृष्टनाशकादेव वा तन्निवृत्तिः। स च प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानरूपषोडशधाविभक्तसप्तपदार्थीप्रत्याकलनपरिशोधितपरमन्यायमार्गस्यात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गरूपहेयोपादेयभूतद्वादशविधप्रमेयसमूहालम्बनरूपसाक्षात्कारसमनन्तरभावी केवलनिर्विकल्पक-

रूपः । तत्र च निर्विकल्पके आत्मभिन्नं न किमपि-भासते, निर्गुणनिरञ्जनादिश्रुतयोऽपि तमेवावधीकृत्य प्रवृत्ताः । पारमार्थिकत्वविभागोप्युनिषदि साक्षान्मोक्षानुकूलतदनुकूलत्वविरह्युक्त एव शङ्कराचार्यप्रभृतीनामपि तदेव तात्पर्यम् । अर्वाचीनैर्वेदान्तिभिरन्यत्प्रापप्लुयत इति युक्तमुत्पश्यामः । तस्मात्—

प्रामाणिको निषेधश्चेत् भेदः प्रामाणिकस्तदा ।
निषेधश्चेन्न भेदस्य भेदः प्रामाणिकस्तदा(१) ॥
अद्वैतसिद्धिश्चेत्सत्या सिद्धं द्वैतं ततस्तया ।
अथ नाद्वैतसिद्धिश्चेत् सिद्धं द्वैतं ततस्तया ॥
सत्या श्रुत्याऽस्ति ते भेदं कथं द्वैतं न सेत्स्यति ।
असत्यैरस्ति ते द्वैते कथं द्वैतं न सेत्स्यति ॥
अद्वैतं कोऽपि धर्मश्चेत् ब्रह्म चास्तीति मन्यसे ।
तर्हि द्वैतं समायातं न चेद् द्वैतं निरंशके ॥
ब्रह्मैवाद्वैतमिति चेत् न विवादस्तदाऽऽवयोः ।
ब्रह्मणः श्रुतिवेद्यत्वं केन नाभ्युपगम्यते ॥

---

(१) अत्र मधुसूदनसरस्वतीप्रणीते अद्वैतरत्नरक्षणे पृ० ४० ( निर्णयसागर सस्करण ) द्रष्टव्यं यत्रेयं कारिका भेदनिरासरूपेणेत्थं पठिता'प्रामाणिको निषेधश्चेत्भेदोऽप्रामाणिकस्ततः । भेदस्यापि निषिद्धत्वात् श्रुतिभंगोऽन्यथा भवेत्' ॥

आत्मन्याजानिकं[1] भेदमजानाना मुमुक्षवः ।
माभूवन्निष्फलायासा इति भेदः प्रकाशितः[2] ॥

इति महामहोपाध्याय श्रीशङ्करमिश्रकृतौ भेद-
प्रकाशापरनामधेयं भेदरत्नं समाप्तम् ।



१ 'आत्मात्वाज्ज्ञातिकम्' पाठान्तरमशुद्धमिव प्रतिभाति ।

२ इयं कारिकाऽद्वैतरत्ने भेदखण्डनरूपेणेत्थं पठिता—

आत्माऽभेदमजानाना स्वतः सिद्धं मुमुक्षवः ।
माभूवन्निष्फलायासा इत्यभेदो निरूपितः ॥

# भेदरत्नस्य शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| विद्यामाया प्रकृतद्दिति | मायाऽविद्या प्रकृतिरिति | ३ | १ |
| द्रुष्ट | ऽद्रुष्ट | ,, | १ |
| नुमः शम्भु | नुमो भिन्न | ,, | ४ |
| छान्दसे | छान्दसाः | ,, | ७ |
| लोक | भेद | ,, | १४ |
| मरोहित | मलोहित | ४ | २ |
| मनो न तेजस्क | मनोऽतेजस्क | ,, | ४ |
| ममात्रमगोत्र | मनामगोत्र | ,, | ५ |
| विवृतमपूर्व | विवृतमसंवृतमपूर्व | ,, | ६ |
| तदश्नाति | तदश्नोति | ,, | ६ |
| तदश्नाति | तदश्नोति | ,, | ७ |
| यद्यपि क्रमात् | अह्यप्रक्रमात् | ,, | १० |
| अन्यथा अभिधाना | अन्यथा वैधर्म्याभिधाना | ,, | १३ |
| तदश्नाति | तदश्नोति | ,, | १४ |
| नाश्नाति | नाश्नोति न व्याप्नोति | ,, | १५ |
| तदश्नाति | तदश्नोति | ,, | १५ |
| न कश्चिदात्मा | न वा कश्चिदात्मा | ५ | १ |
| कर्मान्यतरकर्मावयव | कर्मावयव | ,, | ३ |
| स्वरूपवत्… | स्वरूपवर्णनम् | ,, | ४ |
| इवपदसंदंशात् | इवपदसंदानाद् | ,, | ९ |
| अभिन्नो भवतीति | अद्वैतो भवतीति (पा०) | ,, | ११ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
|---|---|---|---|
| अन्यथा द्वैतं | अन्यथा हि द्वैतं | ६ | १ |
| धर्मोपरागेण | धर्मोपरागमात्रेण (पा०) | ,, | १ |
| हिन्तालादीनामपि | हिन्तालादिगतमपि | ,, | ११ |
| एवम्‘एक एव | एक एव (पा०) | ,, | १२ |
| भेदेऽपि नराभिन्नेषु | भेदेन वा भिन्नेषु | ,, | १५ |
| भूतः क्षेत्रज्ञ आत्मा सत्यो | भूतः सत्यः आत्मा क्षेत्रज्ञो | ,, | १५ |
| नत्ववच्छेदकशरीरभेदेनात्मभेदवन्मरण बन्धेन शरीरभेदेऽपि बाल्यकौमारादिभेदेऽपि आत्मनो न भेद इत्यर्थात् | न तु देवदत्तयज्ञदत्तशरीरभेदेनात्मभेदवत् जन्ममरणप्रबन्धेन शरीरभेदेऽप्यात्मभेद इत्यर्थात् | ,, | १६ |
| तथा जन्ममरणप्रबन्ध | तथा तरङ्गवदतिचपलजन्ममरणप्रबन्ध | ७ | २ |
| तत्तत्कर्मपरतन्त्रो यातुधान मानुषपशुमृगसरीसृपति शरीरप्रबन्ध इति । | तथाहि क्वापि जन्मनि राजाहं क्वापि स्थूलोऽहम् इत्येकमेवात्मानमविद्या शरीराच्छरीरे समारोप्य बहुप्रकारवैचित्र्येणाखेदयति । | ,, | ३ |
| “द्वा सुपर्णा | तथा “द्वा सुपर्णा | ,, | ७ |
| किञ्चात्र श्रुतौ | किंच यत्र श्रुतौ | ,, | १० |
| विश्वे देवाः | विश्वे देवास आगच्छत | ,, | १३ |
| क्वचित्संबद्ध एव | क्वचित्संबन्ध एव | ,, | १४ |
| भूतोऽनुवाद | भूतो वाऽर्थ | ८ | १ |
| योऽनेन स जुहोति | योऽन्येन जुहोति | ,, | ४ |
| परकृतिपुराकल्पयोरिति | परकृतिपुराकल्पयोरपि | ,, | ६ |
| पनिषद्वतारोपि भेद | पनिषदवतारो भेद | ,, | ९ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| न्तर्भावे तद्व्यथावृत्ति | न्तर्भावेऽतद्व्यथावृत्ति | ९ | १ |
| न्तरभावि घटो | न्तरभाविनो घटो | ,, | ५ |
| पूर्वाज्ञाता | अज्ञाता (पा०) | ,, | ६ |
| विषयकत्वकल्पना | विषयत्वकल्पनात् | ,, | ९ |
| भेदोऽन्योन्याभावो | अन्योन्याभावो भेदो | ,, | १६ |
| न भासत इति यत्किञ्चिदेतत् | नभासत इति चेत् यत्किञ्चिदेतत् | १० | २ |
| ध्ययनमेव विषयार्थः | ध्ययनमेव विषयः | ,, | ९ |
| विषयतयापि | विषयतयैव श्रुत्यक्षरार्थव्याख्यानमात्रपरत्वान्न तु मन्तव्य इति विधिविषयतया | ,, | १३ |
| त्वयोपपादितानां | त्वयोपदर्शितानां | ,, | १७ |
| भेदपदार्थ एव | भेदानुभव एव | ,, | १८ |
| विषयबाधगम्या | विषयबाधकगम्या | ११ | ३ |
| बाधश्च | बाधकं च | ,, | ४ |
| प्रत्यक्षाभावात् | प्रत्यक्षस्याभावात् | ,, | ६ |
| इति यदभिधीयते | इत्यभिधीयते (पा०) | ,, | १४ |
| स्वविशिष्टे | स्वविशिष्टे | ,, | १६ |
| स्ववृत्तिः | स्ववृत्तेः | ,, | १७ |
| धिकरणभेद | धिकरणे भेद | ,, | १८ |
| कथमनवस्था | कथं नानवस्था | ,, | १८ |
| एकेन भिन्ने | एकेन भेदेन भिन्ने | ,, | १९ |
| द्वितीयभेदः तेन | द्वितीयस्तेन | ,, | १९ |
| परिहारोऽप्यन्योन्याश्रयः | परिहारेऽप्यन्योन्याश्रयः | १२ | १ |
| र्तवत इति | वर्ततामिति | ,, | ४ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
|---|---|---|---|
| दुःसमाधिः | दुःसमाधः | १२ | ४ |
| भेदाभ्युपगमवैयर्थ्य | भेदाभ्युपगमे वैयर्थ्य | ,, | ५ |
| कृतकृत्यत्वेन | कृतकरत्वेन | ,, | ६ |
| वात्मकभेदो | वात्मको भेदो | ,, | १० |
| स्वरूपलक्षणामधिकृत्य | स्वरूपलक्षणां वृत्तिमधिकृत्य | ,, | १२ |
| उत्पन्नमात्रः कथं घटोऽपि | उत्पन्नमात्रं कथं घटः | ,, | १५ |
| विशेषश्चेतरत्र | विशेषश्च तत्र | ,, | १६ |
| स्वभावसम्बन्धः | स्वरूपसम्बन्धः | १३ | १ |
| णोपश्लिष्ट | णोपरक्त (पा०) | ,, | २ |
| नासीदेव | नासीत् | ,, | ३ |
| भिन्न एव घटे भेदो | भिन्ने घटे स भेदो | ,, | ११ |
| तदिति चेन्न | तदेति चेन्न | ,, | १२ |
| वात्माश्रयः सञ्जातः | वात्मश्रयोऽशतः | ,, | १३ |
| नियमाभावात् | नियमानङ्गीकारात् | ,, | १४ |
| दण्डीपुरुषः कुण्डलीत्युक्ते दण्डेऽपि कुण्डलसंबन्धः प्रतीयते | दण्डःपुरुषे दण्डिनीत्युक्ते दण्डेऽपि वा दण्डसंबन्धः प्रतीयते | ,, | १६ |
| तत्राप्या | अत्राप्या | ,, | १८ |
| वच्छेदकत्वे व्यवच्छेदकत्वं | वच्छेदकव्यवच्छेदकत्वं | १४ | २ |
| भेदवताऽऽश्रितो | भेदवदाश्रितो | ,, | ६ |
| विशेषणं नानेति चेत् | विशेषणं नामेति चेत | ,, | ८ |
| नित्यसंबन्धात् | नित्यसम्बद्धत्वात् | ,, | ९ |
| मित्येव नाङ्गीकुर्मः | मित्येवाङ्गीकुर्मः | ,, | १० |
| अतीते नाना | अतीतेनानागतेन | ,, | ११ |
| प्रतीतेश्च | प्रतीतेः | ,, | १२ |
| नियमाक | नियामक | ,, | १७ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
|---|---|---|---|
| घटो नष्टो | घटो विनष्टो | १५ | २ |
| तथाचा | यथाचा | ,, | ३ |
| पूर्वमासीदेव । ननूत्पन्न स्यापि भेदसम्बन्धः | पूर्वमासीदेवमनुत्पन्नस्यापि घटस्य भेदसबन्धः | ,, | ४ |
| संबन्धिभिन्नः यस्तु | संबन्धिभिन्नोऽयन्तु | ,, | ६ |
| समवायोऽपि सम | समवायेऽपि मम | ,, | ८ |
| एवं रूपवति | एवं च सति रूपवति | ,, | ९ |
| मनुपपाद्यम् | मुपपाद्यम् | ,, | ११ |
| अनुत्तमतुल्यस्यैतादृश | अनुन्मत्तस्यैतादृश | ,, | १६ |
| प्रकारेणोपस्थापितस्य | प्रकारेणोपस्थितस्य | ,, | १७ |
| विरुद्धप्रकारावच्छेदक | विरुद्धत्वप्रकारावच्छेदेन | ,, | १८ |
| प्रश्नो मृण्मयोऽयं | मृन्मयोऽयं | ,, | १९ |
| सुखात्मकत्वे | सुखात्मकत्व (पा०) | १६ | ३ |
| संभवे तदेवोत्तरं | संभवस्तद्दोत्तरं | ,, | ५ |
| भेदः क्व | भेदः कुत्र | ,, | ६ |
| दुर्घटवेदान्तिनस्तु | दुर्दुरूढवेदान्तिनस्तु | ,, | ९ |
| निराकर्तव्याः | निरसनीयाः | ,, | १० |
| नाम तथापि | नाम तथा तथापि | ,, | १२ |
| प्रतिभाशोको | प्रतिभाशोषे | ,, | १३ |
| स्त्वन्मतेनैव | स्त्वनुन्मत्तैरेव | ,, | १५ |
| अभेदो नाम | अभेदो नाम धर्मो | ,, | १६ |
| आद्ये यद् | आद्ये तद् | ,, | १७ |
| त्तव इत्थं | त्कथं | ,, | १८ |
| भेदाभिन्ने के | भेदाभिन्ने को | १७ | ३ |
| ऽभेदा | ऽभेदो | ,, | ४ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
|---|---|---|---|
| वर्तन्ते | वर्तते | १७ | ४ |
| स्त्वाङ्गीकारे भेदःपर्यवसन्न | स्त्वेच भेदपर्यवसानम् | ,, | ५ |
| परन्त्व | किन्त्व | ,, | ८ |
| विश्राम्यति | विश्राम्यतु | ,, | ९ |
| अन्यस्वाभाव्यसाकाङ्क्ष | अन्यसाकाङ्क्ष | ,, | १३ |
| ब्रह्मणोऽन्यभेद | ब्रह्मणोऽभेद | ,, | १४ |
| ब्रह्म नान्यसाकाङ्क्ष | ब्रह्म अन्यासाकाङ्क्ष | ,, | १६ |
| मादाय विरोध | मादायाविरोध | १८ | १ |
| निरूप्यमाणोऽन्यसाकाङ्क्षो | निरूप्यमाणोऽन्यासाकाङ्क्षो | ,, | २ |
| ऽन्यसाकाङ्क्षोऽस्तु | ऽन्यसाकाङ्क्षोऽस्तु को विरोधः | ,, | ३ |
| घटत्वप्रकारस्व | घटत्वभेदत्वप्रकार | ,, | ४ |
| भिन्नं ब्रह्म | भिन्नं ब्रह्मअभेदो वा ब्रह्मेति | ,, | ६ |
| मन्यमाकाङ्क्षत इति | मन्यसाकाङ्क्षतेति | ,, | ६ |
| भिन्नो घटो भेदो वा | घटो भिन्नो भेदो वा घट इत्यपि | ,, | ६ |
| अन्यमाकाङ्क्षत इति | न्यसाकाङ्क्षमिति | ,, | ७ |
| दोपरि | द इति | ,, | ८ |
| तमात्मनि निवेशयेत् | तमप्यात्मन्यन्तर्भावयेत् | ,, | १४ |
| तथा सति | तथा च सति | ,, | १५ |
| एव तन्न | एवैतन्न | ,, | १५ |
| अभ्युपगमे | अभ्युपगमे वा | ,, | १७ |
| घटप्रतियोगिकं | पटप्रतियोगिकं | ,, | १७ |
| घटस्य स्वरूपं | घटस्वरूपं | ,, | १८ |
| भेदाय तवायासो | भेदावतारायासो | ,, | १९ |
| एवं घट | एवं च घट | १९ | १ |
| घटस्वरूपस्य | घटरूपस्य | ,, | २ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
| --- | --- | --- | --- |
| ।तियोगित्वं पटस्य स्वरूप- ।भेत्यनयापि वाचा | भेदस्य स प्रतियोगी पटस्य स्वरूप- मित्यत्रानया दिशा | १९ | २ |
| दन्यपदार्थे घटो | दन्यपदार्थो घटो | ,, | ६ |
| बिशेषणमात्रमभ्युपेतं | विशेषणत्वमात्रमभ्युपेतं | ,, | १२ |
| घटस्य पटा | पटस्य घटा | ,, | १३ |
| दुर्वचेननैव | त्वद्वचनेनैव | ,, | १६ |
| घटादयो भावा | घटादयो | २० | १ |
| निष्प्रतियोगिका एव | निष्प्रतियोगिकास्त एव | ,, | २ |
| निष्प्रतियोगिकाः | सप्रतियोगिकाः | ,, | ३ |
| अभावतदितरनिरूपणाः | अभाववदेवेतरनिरूपणाधीननिरूपणा | | ६ |
| आत्मानमेवोपालभस्व येनैवं नियममङ्गीकुरुषे इतिचेद् न अभिप्रायनियममविदुषस्तवैवो पालभ्यत्वात् | पुस्तकान्तरे नास्ति | ,, | १० |
| तज्ज्ञानं नियमतस्तद्वस्तु | तद्वस्तु | ,, | १६ |
| तथा च | यथा च | ,, | १७ |
| नास्य विशिष्ट | नान्यविशिष्ट | ,, | १८ |
| अभावत्वेन | स्वाभावाभावत्वेन | ,, | १९ |
| मानो नियमतोऽभावज्ञा | मानो घटो नियमतः स्वा- भावज्ञा | २१ | १ |
| सप्रतियोगिक एव । यद्यपि | सप्रतियोगिक इति अत एव यद्यपि | ,, | २ |
| इत्युक्तो नियम इति | इत्युक्तं नियमत इति | ,, | ४ |
| वह्नित्वप्रकारकज्ञानापेक्षं | वह्नित्वप्रकारकज्ञानं धूमज्ञाना- पेक्षि | ,, | ५ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
|---|---|---|---|
| विशिष्ट | न तद्विशिष्ट | २१ | ८ |
| ज्ञानवैशिष्ट्य | ज्ञानेवैशिष्ट्य | ,, | ९ |
| विरोध एव | विरोधे कृत एव | ,, | १० |
| संयोगादयश्च | घटाभावादयश्च | ,, | १२ |
| व्यवहार इति चेन्न | व्यवहारभेद इति चेन्न | ,, | १४ |
| निरपेक्षत्वकृत | निरपेक्षत्वप्रयुक्त | ,, | १६ |
| संयोगस्य प्रमेयपदं वाचकमित्यारभ्य पदेन न व्यवह्रियेत इति चेन्न इत्यन्तस्य स्थाने प्रमेयपदं संयगस्यासाधारणं वाचकं न भवति तथापि गुणादिपदं तथा भवतीत्यदोषः तत्सिद्धमेतद्धटादय एव स्वरूपभेदास्तत्त्वेन ज्ञायमानाः सप्रतियोगिका इति। ननु स्वरूपं भेदइति स्वरूपभेदस्यानुगतस्यानुगतधर्मव्यतिरेकेण कथं समयग्रहस्तथा च स्वरूपं भेद इत्युक्ते कस्य स्वरूपस्य प्रतिलम्भः स्यात्सकलाप्रतीतौ च तत्स्वरूपं भेदज्ञेनापि स्वरूपभेद इति पदेन न व्यवह्रियेतेति चेन्न—इति पाठः। | | ,, | १७ |
| अपरजात्यन्ताभावनैय | अपरज्ञात्यन्ताभावनैय- | २२ | १३ |
| कयाचिद्वृत्त्या | कयाचित्प्रत्यासत्त्या | ,, | १७ |
| स्वनिष्ठधर्मात्यन्ताभावासमाना- | स्वनिष्ठधर्मात्यन्ताभावसमाना- | ,, | १८ |
| तत्तत्समभिव्याहाराय यत्नः | तत्तत्समभिव्याहारप्रयत्नः | २३ | २ |
| रूपणः। नन्वसंहितो- | रूपणोऽनन्वसंहितो- | ,, | ६ |
| प्रत्ययायोगाद्भिद्यत | त्। अत एव भिद्यते | ,, | ५ |
| घटादिर्भेदः।भेदस्तु भेदनत्वाद न्योन्याभाव एवे | घटादेर्भेदोभेदस्तु भेदनं तथा चान्योन्याभावे | ,, | ७ |
| अभावानामन्योन्याभावविरहिणा भेदवत्त्वाभावाद्भिद्यत इतियोगविरहिणां | अन्योन्याभावविरहिण्यभेदवत्त्वाद्भिद्यत इति योगविधुराणाम् | ,, | ८ |
| शुक्तिस्वरूपमेव | शुक्तिस्वरूपे दृष्टे | ,, | ११ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| दूरादभिव्यक्त | दूरादनभिव्यक्त | २३ | १३ |
| आरोप्यविषयगतव्यतिरेक दर्शनं वा | आरोपविषयव्यतिरेकदर्शनं वा भेदत्वेन दर्शनं वा | ,, | १७ |
| स्वरूपभेद एव ग्रहे | स्वरूपभेदग्रहे | २४ | १ |
| समावेशवन्नील | समावेशान्नील (पा०) | ,, | ६ |
| जात्युत्तरत्वात् | जात्युत्तरमेतत् | ,, | ७ |
| तथाच | यथाच | ,, | ८ |
| परस्परपरीहारकत्वं | परस्परपरिहारकत्वं | ,, | ९ |
| नान्तरीयकत्वेनाभेदोल्लेख | नान्तरीयकतयाऽभेदोल्लेखांश | ,, | १३ |
| नुल्लिख्याभेदधीः | नुल्लिख्याऽभेदपदादभेद इति धीः | ,, | १५ |
| भेदे च | भेदे तु | ,, | १६ |
| अभेदभानमावश्यकम् | अभेदभानं नावश्यकम् | ,, | १७ |
| ऽभेदप्रथा | ऽभेदप्रमा (पा०) | ,, | १८ |
| नाभिन्नाविति | न भिन्नाविति | २५ | ४ |
| उभयथापि | उभयथा | ,, | ५ |
| हि भेदस्य निषेधे | निषेधे | ,, | ६ |
| तादृशप्रतियोगिनो | तादृशस्य प्रतियोगिनो | ,, | ७ |
| अपारमार्थिकनिषेधे | अपारमार्थिकभेदनिषेधे | ,, | ७ |
| मदभ्युपगम्यमान | भेदमभ्युपगम्यमानस्य | ,, | ८ |
| देवाभेदासिद्धिः | देव भेदसिद्धिः | ,, | ९ |
| अभेदज्ञाने | अभावज्ञाने | ,, | ९ |
| प्रतिश्रुतित इति | श्रुतेरिति | ,, | १८ |
| श्रुतीनां | श्रुत्या | २६ | २ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
|---|---|---|---|
| घटादिनिष्ठ उत ब्रह्मनिष्ठं | घटादिनिष्ठमुत ब्रह्मनिष्ठमुतोभय-निष्ठम् | २६ | ३ |
| मेवाद्वैतं | मेवाद्वैतं नाम | ,, | ६ |
| भेदविरोधिविरोधित्वाविरोधित्वाभ्यां प्रकाराभ्यां | भेदविरोधित्वतदविरोधित्वाभ्यां | ,, | ७ |
| स्तत्रापि | स्तथापि | ,, | ९ |
| तदसिद्धिः | तत्सिद्धिः | ,, | १० |
| चोभयमद्वैतं मनुषे | चोभयगतमद्वैतं त्वन्नये | ,, | १० |
| तथात्वमपि | तथासत्त्वमपि | ,, | १० |
| अद्वैतं न प्रतिपाद्यते | अद्वैतमात्रं न प्रतिपाद्यते | ,, | १३ |
| द्वैतं प्रतिषिध्यते | द्वैतं निषिध्यते | ,, | १३ |
| कथं द्वैतनिषेधः | द्वैतसिद्धिः । अन्त्ये कथं द्वैतनिषेधः | ,, | १५ |
| नानात्वञ्चान्योन्याभावस्तुभेदः | नानात्वञ्चान्योन्याभावाधीनं त्वया वाच्यमन्योन्याभावस्तु भेदः | ,, | १७ |
| प्रतियोगिवाच्यम् | प्रतियोगि वाच्यम् | २७ | १ |
| च सिद्धमद्वैतम् | च सिद्धौ सिद्धमद्वैतम् | ,, | १ |
| असिद्धा | तदसिद्धा | ,, | २ |
| वा भावप्रत्ययो | वा अभावप्रत्ययो | ,, | ४ |
| प्रतियोगी वा | प्रतियोगिता सत इति | ,, | ५ |
| तथाभ्युपगमादित्यारभ्य अभिधीयत इत्यन्तं | पुस्तकान्तरे नास्ति | ,, | ५ |
| एवं च | एवं | ,, | ८ |
| तथा चाभाव | तथावाऽभाव | ,, | ८ |
| व्यवस्थापनबालधन्धस्य | स्थापनधन्धनस्य | ,, | ९ |

| अशुद्धम् | शुद्धम् | पृ० | पं |
|---|---|---|---|
| स्फुटीकरणात् | स्फुटीकरणम् | २७ | १० |
| पटो घटे | पटश्च घटे | ,, | १० |
| एवञ्च सति | एवं सति | ,, | ११ |
| नुपपत्तेः । अन्योन्याभावाभावाद् | नुपपत्तौ अन्योन्याभावात्मकभेदाभावाद् | ,, | १३ |
| नवबोधात् | नवगमात् | ,, | १५ |
| संसर्गाभावप्रवेशप्रसङ्गः | संसर्गाभावाविशेषप्रसङ्गः | २८ | २ |
| तादात्म्याभावो व्यवहारात्मा | तादात्म्याभावं व्यवहरामो | ,, | ३ |
| विरहस्तयो | विरहनिबन्धनस्तयो | ,, | ५ |
| तदन्योन्याभावप्रतीतिरितिविशेषः | तादात्म्याभावप्रतीतिविशेषः स्यात् | ,, | ८ |
| तदवस्थमेवेति चेन्न इत्यस्य स्थाने तदवस्थमेवेति चेद् घटस्य प्रतियोगिनो यदवच्छेदकं तादात्म्यं तस्य घट एव प्रमितत्वात् नहि घटतादात्म्यात्मा न घटः । ननु घटनिष्ठं तादात्म्यं चेत्पटे निषिध्यते तदा तादात्म्यप्रतियोगिकः संसर्गाभाव एवायमिति चेन्न इति पाठः । | | ,, | ११ |
| नञर्थे | नञन्वयो | ,, | १५ |
| योऽन्वयः | ० | ,, | १६ |
| वैलक्षण्योपपत्तेः | वैलक्षण्यसिद्धिः | ,, | १८ |
| पटो भवतीति | पटो न भवति | ,, | १८ |
| पटो वा नास्तीति | पटो नास्तीति | ,, | १९ |
| प्रत्यक्षत्वात् | प्रत्यक्षसिद्धत्वात् | २९ | ४ |
| घटः पटो नास्तीति | घटः घटे नास्तीति | ,, | ५ |
| नेह घटः | नेह पृथिवीनेह घट इत्यत्रापि | ,, | १० |
| पृथिवीत्वावच्छिन्नो | पृथिवीत्वावच्छिन्नप्रतियोगिकः | ,, | १० |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| तादात्म्याभावयोः | तादात्म्याभावसंसर्गाभावयोः | ३० | १ |
| नास्तीति नेह | नास्ति नेह सम्मृष्टघटो नेह | ,, | ४ |
| विक्रियमाणयोरविशेषात् | विक्रियमाणार्थयोरविशेषात् | ,, | ७ |
| कथमुपपादनीयः | कथमुपपादनीयः तस्य भेदगर्भत्वात् | ,, | १० |
| असति च भेदे | असति भेदे | ,, | १४ |
| तन्तुमत्त्वान्मृद | तन्तुवद्वा मृद | ,, | १६ |
| नोपाददीत | वोपाददीत | ,, | १६ |
| वाजपेयकलञ्जयोरभेदात् | वाजपेयकलञ्जभक्षणयोरभेदात् | ,, | १७ |
| नपिवेदिति विधेः | न पिवेदिति निषेधात् | ३१ | १ |
| कर्मपरे तदागम | कर्मपरतत्तदागम | ,, | ४ |
| कोवोपनिषदुपदेशप्रतिपाद्य | कोवोपनिषत्प्रतिपाद्यत्वाभिमत | ,, | ५ |
| श्रुत्यासां | श्रुत्या तासां | ,, | ७ |
| स्वर्गादयो | स्वर्गादयोऽन्य | ,, | ९ |
| सन्तु पारमार्थिकाः | सन्तु नाम पारमर्थिकाः | ,, | १३ |
| फलभावोऽपार | फलभाववादिभिः स्वरूपपार | ,, | १६ |
| सद् भेदो नास्तीति | भेदो नास्तीति | ३२ | १ |
| धुरीणानां | धुरीणो | ,, | २ |
| उच्यते | चेदुच्यते | ,, | ४ |
| विषयकत्व | विषयत्व | ,, | ६ |
| ब्रह्मणि अस्य | ब्रह्मण्यप्येतस्य | ,, | ७ |
| विज्ञानविषयत्वं | ज्ञानविषयत्वं | ,, | ८ |
| वाक्ये | वाक्येन | ,, | ९ |

